निर्मिमते। न हि तत्र द्वैधे सति धर्मो व्यवतिष्ठेत। अविनाशि तत्त्वं ज्ञातवान् ब्राह्मणः। तथा हि—

यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपणः।
अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः॥

—बृ० ३।८।१०

अक्षरं ब्रह्म परमम्। —गीता

इत्थं च ब्रह्मज्ञ एव स्वरूपतो ब्राह्मण इति तमेवाचार्यकुलमधितिष्ठति। परम्परायां तद् ब्राह्मण चैतन्यं स्तन्यमिव बालमिदं राष्ट्रमुपजीवयति। इदानीमाधुनिकताव्यपदेशेन देशेऽस्माकं काकिणीनीतिर्ब्राह्मणत्वं विश्वतो निगिलन्ती दृश्यत इत्याचार्यकुलहान्या राष्ट्रं विपद्यते; खिद्यते जनः, भिद्यन्ते धर्मसेतवः, छिद्यन्ते शास्त्रोपवनानि, विधिं निषेधं निषेधं च विधिं मन्वानाः पण्डितं मन्यास्तत्र तत्र पदान्यश्नुवाना विद्यन्त इति नीराजकमिव राष्ट्रं सीदति जम्बालजालनिपतितमिव करियूथम्। आचार्यकुलादृते को हन्त निस्तारोपायः ?

अत्राहुः। पुरा नैकमाचार्यकुलं व्यवतस्थे। तथा हि जैनबौद्धादीनां पाखण्डधर्माणां च विद्यमानत्वे मुधा रोरुयते किलाचार्यकुलस्यैकत्वं प्रति। प्राकृतादिभाषासूपनिबद्धेषु तत्तद्धर्मेषु न संस्कृतयैव वाचा व्यवस्था स्वरूपं लेभे। अपि च वैदिका अपि केचिदनीश्वरवादमवाललम्बिरे केचन पुनर्ब्रह्मवादमितरे च वेदमतिरिच्यागमानेव प्रमाणीचक्रुः। परम्पराया विच्छेदे प्रमाणिते कुत आचार्यकुलं राष्ट्राधारत्वं भजेतेति।

अत्रोच्यते। इयमाहोपुरुषिका नैव तथ्यमनुसरति। तथा हि नालन्दायां बौद्धविश्वविद्यालये वेदाः पाठयांबभूविरे तानि तानि च परम्परानुगतानि शास्त्राणि। पाखण्डा अपि श्रुतिस्मृतीरनुसरन्त एव दर्शनानि साधनाभेदांश्च समुपासत। अथ च गीर्वाणवाणी सर्वैरपि परस्तादुपाश्रितेति नातितिरोहितं विदुषाम्। मूलतः प्राकृतमभ्युपयन्तोऽपि बौद्धा जैनाश्च संस्कृतयैव शास्त्रनिबन्धं चक्रुः। किं च नीतिविषये वैमत्यलेशे सत्यपि आर्यावर्तवर्तिनः सदाचारा आचार्यकुलं नातीयुः। आचार्याणां च कुलप्रतिष्ठापनानिष्ठानां सर्वैः सम्मान एव सर्वत्र व्यधायि। अद्यश्वस्तु तत्रैव दुःशीला विलोक्यन्ते जनाः। दर्दुरूढ़ा अङ्ग क्रूरान् कटाक्षान् व्याक्षिपन्ति परिहासजल्पितानि चावकिरन्ति पारम्परिकीषु संस्थासु इत्यहो व्यामोहः।

सर्वं पुराणं न साधु इत्युक्तिः पुराणं सर्वमसाधु इति नाभिप्रैति, न वा सर्वं नवमित्यनवद्यमेव भवति। सन्तः परीक्ष्य प्रत्नां वंशपरम्परामनुरुन्धत एवेति शम्।

□

# संस्कृतसाहित्ये पर्यावरणसंरक्षणम्

डॉ० कृष्णनारायण पाण्डेयः

यदा वनवाससमये पाण्डवाः महीसागरसङ्गमतीर्थे समागताः, भीमसेनेन तीर्थकुण्डे प्रविश्य पाणिपादं प्रक्षालितम्। तं च तीर्थरक्षातत्परो बर्बरीको विरुरोध। जलानि तावत् हस्तपादयोः प्रक्षालनायैव कल्प्यन्त इति कथयन्तं च भीमं भीमो बर्बरीको जगाद—

स्नातव्यं तीर्थमुख्येषु सत्यमेतन्न संशयः।
चरेषु किं संविश्य स्थावरेषु बहिः स्थितैः॥
स्थावरेष्वपि संविश्य तत्र स्नानं विधीगते।
न तत्र देवस्नानार्थं भक्तैः संगृह्यते जलम्।
यच्च हस्तशतादूर्ध्वं सरस्तत्र विधीयते।
संवेशेपि क्रमश्चायं पादौ प्रक्षाल्य यद् बहिः।
ततः स्नानं प्रकर्तव्यमन्यथा दोष उच्यते॥

—स्कन्द पु० कुमारिका-खण्ड, ६०।२०-२३

अयं च निष्कृष्टार्थो गीतो घटोत्कचतनयेन बर्बरीकेण—

मलं मूत्रं पुरीषं च श्लेष्मनिष्ठीवितं तथा।
गण्डूषमप्सु मुञ्चन्ति ये ते बसहभिः समाः॥

एवमेव पुराणं भगवत्या भागीरथ्या अपि पावनता संरक्ष्येति उपदिशति—

श्लेष्माणं वापि निष्ठीवं वा गङ्गातीरे करोति यः।
न दृष्टा निष्कृतिस्तस्य कल्पकोटिशतैरपि॥

—पद्म पु० ७।८।६८

श्लेष्माणं वापि निष्ठीवं दूषिकां वाश्रु वा मलम्।
गङ्गातीरे त्यजेद् यस्तु स नूनं नारकी भवेत्॥

—तत्रैव, ७।८।६४

परिधेयाम्बराम्बूनि गङ्गास्रोतसि न त्यजेत् ।
न दन्तधावनं कुर्याद् गङ्गागर्भे विचक्षणः ।।
कुर्याच्चेन्मोहतः पुण्यं न गङ्गास्नानजं लभेत् ।।

—तत्रैव, ७।६।४४-४५

ब्रह्मपुराणे च—

गङ्गां पुण्यजलां प्राप्य चतुर्दश विवर्जयेत् ।
शौचमाचमनं केशं निर्माल्यमघमर्षणम् ।।
गात्रसंवाहनं क्रीडां प्रतिगृहमथो रतिम् ।
वस्त्रत्यागमथाघातं सन्तारं च विशेषतः ।।

वृक्षारोपणस्य माहात्म्यं चापीत्थमेव गीतम्—

दशकूपसमा वापी दशवापीसमो ह्रदः ।
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ।।

□

# व्याकरणशास्त्रे भारतैतिह्यम्

डॉ० श्री बालशास्त्री

सर्वोऽपि जनः, आब्रह्मस्तम्बपर्यन्तं जीवमात्रं वा, सर्वविधं सौख्यं खल्वात्मनोऽभिलषति, परिजिहीर्षति च स्वल्पतमामपि दुःखानुभूतिम् । परं चैतन्न केवलया इच्छयैव शक्यते सम्पादयितुम् । तदर्थं कश्चन समुचितोपायमूलकः प्रयासः कश्चन तत्फलोपधायका व्यापारः समाश्रयणीयः स्यात् ।

हैयङ्गवीनहृदयैः करुणामूर्त्तिभिर्महर्षिभिः सर्वजनकल्याणकामनयैव समुपनिबद्धेषु शास्त्रेषु विपुलक्षेमंकराः परमनिःश्रेयसकारणीभूता लोकाभिलषितपदार्थोपलब्ध्युपाया राजन्तेतमाम् ।

लोकः खलु स्वस्य, स्वसमाजस्य, देशस्य, राष्ट्रस्य चोपरि समापतितं, सम्भावितं च आधिभौतिकम् आधिदैविकम् आध्यात्मिकं सर्वविधमपि कष्टजातम् उपायान्वेषणपरया पारस्परिक्या विचारचर्चया, स्वाभिप्रायप्रकाशन-परेणोहापोहेन अन्वयव्यतिरेकमनीषया व शक्नोति निवारयितुम्, प्रभवति च सुखसम्पादिकां परिस्थितिं कल्पयितुम् । स्वाभिप्रायस्य स्फुटं प्रकाशो न याथातथ्येन विना वाचं सम्भवतीति, वाक्च शब्दमयीति लोकोपकारायैव व्याकरणशास्त्रापरनामधेयस्य शब्दशास्त्रस्य महर्षिभिर्विहितः समुद्भावः प्रासंगिको बभूव । तथा चाह भगवतीश्रुतिः—

**अस्तमिते आदित्ये, चन्द्रमस्यस्तमिते, याज्ञवल्क्य ! शान्ते चाग्नौ किं ज्योतिरयं पुरुषः ? वागेवास्य ज्योतिर्भवति, वाचैवायं ज्योतिषाऽऽस्ते, पल्ययते कर्म कुरुते याज्ञवल्क्य ! (बृ० उप० ४/३/५) काव्यादर्शे कविर्दण्डी अपि ब्रूते 'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् । यदिशब्दाह्वयं ज्योतिरासंसारं नदीप्यते ।**

वाक्च व्याकरणशास्त्रनियन्त्रितैव धार्यते लोकैः । तथा चोक्तं "वाणी व्याकरणोज्झिता" इति ।

तदेवं व्याकरणशास्त्रेणापि सह लोकानां विद्यते खल्वभेद्यः सम्बन्धः। अतोऽत्र व्याकरणशास्त्रे लोकस्य तात्कालिकं वास्तविकं चित्रं पाणिनीयसूत्रेषु महाभाष्य-पङ्क्तिषु शक्नुमो निभालयितुम्। यतो हि तत्र क्रियासमभिहारेण लोकचर्चां कुर्वाणः, लोकव्यवहारेण च शास्त्रार्थनिर्णयं विदधानो दृष्टिपथमवतरति भाष्यकारः। सिद्धे शब्दार्थसम्बन्धे इत्यत्र सिद्धशब्दः कथमुपात्तः, कथं वा वृद्धिरादैच् (१/१/१) इति सूत्रे संज्ञावाचकं वृद्धिशब्दमादितः प्रयुंक्ते आचार्यः इति प्रश्नस्य "लोकमंगलकामना" एव समाधानं भाष्यकृता विहितम्। तथा हि—

> **"मांगलिक आचार्यो महतः शास्त्रौघस्य मंगलार्थं सिद्धशब्दमादितः प्रयुंक्ते,··· ······अध्येतारश्च सिद्धार्था यथा स्युः [पस्पशा] तदेकम् आचार्यस्य मंगलार्थम् मृष्यताम्। मांगलिक आचार्यः मंगलार्थं वृद्धिशब्दमादितः प्रयुंक्ते। इति लोकव्यवहाराधारेण शास्त्रीयार्थसाधकानि खलु भाष्यवचांस्यपि महाभाष्य यत्र तत्र बहुलं विकीर्णानि। यथा "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते।"**

लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते। "लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते।" (१/१/१), "अथवा अस्थानेऽयं यत्नः क्रियते, नहीदं लोकाद् भिद्यते।" (१।१।१), "लोकविज्ञानात् सिद्धम्।" (६।१।१) इति।

## सामाजिकी स्थितिः

यतो लोकानाश्रित्यैव प्रसरति भाषा, अतो भाषालोकयोः परस्परं विद्यतेऽभेद्यः सम्बन्धः इति न तिरोहितं प्रेक्षावताम्। अत्र भाषायां लोकजीवनसम्बन्धिनो नाना विधाः शब्दा व्यवहारदशायामावश्यकतानुसारमुत्पद्यन्ते, केचन विलीयन्ते इति शब्दानामपि जीवनकालो भवति। केषां चित् स्वरूपपरिवर्त्तनं, केषां चिदर्थपरिवर्त्तनमपि जायते शब्दानाम्। इमे च उत्पन्नाः, उत्पद्यमानाः, विलयं गताश्च शब्दा तात्कालिकीं सामाजिकीं स्थितिं परिवर्णयन्ति, उद्घाटयन्ति च लोकानां पारस्परिकं व्यवहारं, प्रकाशयन्ति च राजनीतिकीं व्यवस्थाम्। महर्षिः पाणिनिश्च स्वसमकालिकानां प्रचलित-लोकजीवनसम्बन्धिनां शब्दस्वरूपाणां सूक्ष्मतमं वैज्ञानिकं विवेचनं विधाय तेषां निष्पत्त्यर्थं यथायथं सूत्राणि निर्ममौ। अतः तदादर्शेन तात्कालिक-लोक-प्रति-बिम्बावलोकनं न दुःशकम्।

## चातुर्वर्ण्यम्

तदानीन्तनसमाजस्य व्यवस्था वर्णान् आश्रमांश्चाश्रित्य प्रचलति स्म। गुण-वचनब्राह्मणादिभ्यः (५।१।१२४) धर्मशीलवर्णान्ताच्च (५।२।१३८) इति सूत्रयोः

ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणामेषां चतुर्णानां वर्णानामुल्लेखो गणे उपलभ्यते । महाभाष्ये च "तेन तुल्यं क्रिया चेत्" (५।१।११५) इति सूत्रे "सर्वे एते शब्दा गुणसमुदायेषु वर्तते, ब्राह्मणः, क्षत्रियः। वैश्यः, शूद्र इति इत्यैवं चतुर्णा वर्णानां विद्यते चर्चा । अन्यासामपि जातीनां समुद्भवस्तदा समजायत इति कतरकतमौ जातिपरिप्रश्ने (२।१।६३) इति सूत्राज्ज्ञायते । जातेरस्त्रीविषयात् (४।१।६३) इति सूत्रे भाष्यकृता गोत्रं च चरणैः सह इत्यैवं जातिपरिभाषां विदधता एतयोर्जातित्वमुररीकृतमेव । अत एव जातिपरिप्रश्नावसरे कतरः कठः, कतमः कालापः इत्येवं पृच्छाऽऽसीत्प्रचलिता । पाणिनैः काले गोत्र-चरण-भेदानुसारेण बह्वीनां जातीनां समुद्भवः समुदियाय । अतः गोत्र-प्रकरणनाम्नां सहस्रं प्रायो दृश्यते, येषां खलु भिन्न-भिन्न-जातिरूपेण सामाजिकं संगठनमपि मूर्त्तरूपतां दधौ । पाणिना गोत्रत्वेनोक्तानां व्यक्तीनां जातीनां नाम्नां ध्वंसावशेषः पंजाब-सिन्ध-सीमान्त प्रान्तीयजातिषु उपनामरूपेणोपलभ्यते । यथा अरोडा-खत्रीजातौ कंवर-हंस-चोपे-खेत-इत्यादयो नडादिगणाश्वादिगणविकादिगण-पठिताभिः कुमार हंसक-चौपायन-क्षैतयतादिभिरुपजातिभिः सम्बद्धा विद्यन्ते । अतो विद्यायोनिसम्बन्धेभ्यः (६।३।२३) इति सूत्राद् विज्ञायते यत्तस्मिन्काले योनिसम्बन्ध-विद्यासम्बन्धाभ्यां सामाजिकं संगठनं समाभूत् । योनिसम्बन्धो गोत्ररूपेण विद्यासम्बन्धश्च चरणरूपेण जातिरूपतां दध्रे ।

**ब्राह्मणः**

महाभाष्ये ब्राह्मण-क्षत्रिय-विट्-शूद्राः इत्यैवं येन क्रमेण चतुर्णा वर्णानामुल्लेखो विहितः, स एव क्रमः सामाजिकसम्मानस्याप्यासीत् । समाजे ब्राह्मणस्य स्थानं प्रथमं बभूव । ब्राह्मण-मातापितृभ्यां समुत्पन्नो विद्वान्, ब्राह्मणाहितकर्मकर्त्ता, सदाचार-शील-सम्पन्नो जनो ब्राह्मणपदेनोच्यते स्म । जन्मना तपसा, शास्त्राभ्यासेन ब्राह्मणत्वं परिष्क्रियते स्म । विद्यया तपसा च हीनो जातिब्राह्मणः, ब्रह्मबन्धुः इत्यादिशब्दैर्व्यवह्रियते स्म । ब्राह्मणः प्रायशः गौरवर्णः, शुद्धाचरणः, पिंगलाक्षः कपिलकेशश्च भवति स्म । तपः स्वाध्यायरतत्वं तस्य विशेषाधायको गुण आसीत् । आचारशून्यो मर्यादोल्लंघन-कर्त्ता ब्राह्मणः समाजे हीनां स्थितिं लभमानो जायते स्म । ब्राह्महत्या महापातकेषु गणिता । गच्छता शयानेन भक्षणम्, उत्तिष्ठता मूत्रत्यागः एते ब्राह्मणस्य कदाचारा आसन् । तपस्वी, विद्वान् सदाचारसम्पन्न ब्राह्मणः समाजे परमां प्रतिष्ठां प्राप्नोतिस्म ।

**क्षत्रियः**

समाजे द्वितीयं स्थानं क्षत्रियस्य आसीत् । ब्राह्मणवर्णात् किंचिदेव न्यूनो गण्यतेस्म क्षत्रियः । क्षत्रियेषु ये शासकास्ते राजन्या इत्युच्यन्ते स्म । पश्चात् राजन्यम् उपजातिरप्यभूत् क्षत्रियेषु । राजन्यानां निवासदेशोऽपि राजन्यपदेन स्मोच्यते ।

ब्राह्मणवत् क्षत्रियाणामपि गोत्राः स्वतन्त्रा जातयो वा आसन् । राजन्यानां समुदायो राजन्यकशब्देन व्यवह्रियते स्म । क्षत्रशब्दोपि क्षत्रियवाचकः । रक्षणविधानादिविशेष-विद्यानिष्णाताः क्षत्रिया क्षत्रपदवाच्या भवन्ति स्म । समाजस्य रक्षणं तेषामासीत् प्रथमं कर्त्तव्यम् । क्षत्रियनाम्नोऽन्ते वर्मन् इति शब्द प्रयुज्यते स्म ।

**वैश्यः**

वैश्यो विट् इति शब्देनोच्यते स्म । क्षत्रियात् किंचिन्यूनो भवति स्म वैश्यः । समाजे तस्य तृतीयं स्थानम् अभूत् । तस्य नाम गुप्तपदान्तं पालितपदान्तं वा जायते स्म । अतोनुमीयते यत्ते समाजेन रक्षिताः स्म भवन्ति । विशां मुख्यं कर्म धनानां सम्पत्तीनामुत्पादनं वर्द्धनं चासीत् । महाभाष्ये माण्डजग्धिः, कार्णखरकिः इत्येवं द्वयो-र्वैश्यगोत्रयोर्नाम्नी लभ्येते । आर्यः स्वामिवेश्ययोः (३।१।१०३) इति पाणिनिसूत्रा-नुसारं वैश्यस्य कृते अर्थशब्दोपि प्रयुज्यते स्म ।

**शूद्रः**

समाजे शूद्रस्य स्थानं सर्वान्ते विद्यते । ब्राह्मण-क्षत्रिय-वैश्येभ्य इतरे जनाः, आर्यावर्त्तदेशवासिनो तद्बाह्ये देशे निवस्तारो वा, सर्वे शूद्रपदेन स्म व्यवह्रियन्ते । शूद्राणामनिरवसितानाम् (२।४।१०) इति पाणिनिसूत्रानुसारम् अनिरवसित-निरवसित भेदेन शूद्राः द्विविधा आसन् ययोः प्रथमे त्रैवर्णिकसमाजस्य अंगभूता गण्यन्ते स्म । तक्षा, अयस्कारः, रजकः, तन्तुवायः, एते अनिरवसिता शूद्राः । यैर्व्यवहृतं त्रैवर्णिकानां भोजनपात्रम् अग्न्यादिनापि शुद्धि न भजते, एतादृशाः पात्राद्बहिष्कृता निरवसिताः शूद्राश्च चाण्डाल-मृतपादय आसन् । एतेषां निरवसितानां शूद्राणां निवसतिर्भवति स्म ग्रामाद् बहिः ।

आचारशून्या द्विजा अपि शूद्रवद् व्यवहृता जायन्ते स्म । ब्राह्मणात् शूद्राया-मुत्पन्नो वृषल-शूद्र इति कथ्यते स्म । अयमभक्ष्यभोजी सुरापी च भवतीति अस्य स्थानम् समाजे अतिनिकृष्टम् आसीदिति महाभाष्यादवबुध्यते । घृणायाः स्थानमेवायं शूद्र आसीत् । आर्यावर्त्तदेशाद् बहिर्निवासिनामपि केषांचिद् वैदेशिकानां शक-यवनेत्यादीना-मपि शूद्रेषूल्लेखो महाभाष्ये उपलभ्यते । शूद्रेषु आभीरा सर्वश्रेष्ठा आसन् इति एषाम्महा-शूद्रसंज्ञया ज्ञायते ।

**आर्याः, दासाश्च**

आर्ययुवा आर्यकृता, आर्यकुमार, आर्यनिवास इत्यादयः शब्दा आर्याणां सन्दर्भे भाष्य उपलभ्यन्ते । त्रैवर्णिका आर्यशब्देनोच्यन्ते । आर्यौ ब्राह्मणकुमारयोः (६ २.५८) इति सूत्रे आर्यशब्दस्य ब्राह्मणार्थे प्रयोगो विद्यते आर्यब्राह्मण इति । तत्र आर्यक्षत्रिय इति प्रत्युदाहरणात् क्षत्रियस्यापि आर्यता सिद्धा ।

दासास्त्रैवर्णिकेभ्यो बहिर्भूता भवन्ति स्म। एतेषां द्रव्येण क्रयणं परिक्रयणं च स्म जायते। ये नियतकालार्थं द्रव्येण स्वायत्तीकृता भृत्यास्ते परिक्रीतदासाः, ये च आजीवनं कार्यसम्पादनार्थं द्रव्येण गृह्यन्ते स्म ते क्रीतदासा इति दासानामासीद्द्वैविध्यम्। पण्यकम्बलो दासीभाराणां च (६।२।४२) इति सूत्रे दासीभारशब्दः कदाचिद्दास्याः कृते दीयमानद्रव्यस्य बोधकः।

## चत्वार आश्रमाः

महाभाष्ये ब्राह्मणादिषु चतुर्वर्णादीनामुपसंख्यानम् इति वार्त्तिकस्य चातुराश्रम्यम् इत्युदाहरणं लभ्यते। ब्राह्मणादिगणस्योल्लेखः गुणवचनब्राह्मणादिभ्य कर्मणि च (५।१।२४) इति पाणिनीयसूत्रे विद्यते। तस्मिन् काले जीवनं चतुर्षु भागेषु विभक्तं भवतिस्म। प्रतिभागं चाश्रमपदेन व्यवह्रियते स्म। ब्रह्मचर्याश्रम-गृहस्थाश्रम-वानप्रस्थाश्रमसन्यासाश्रमा इति च ते। पाणिनीयसूत्रेषु वर्णाद् ब्रह्मचारिणि (५।२।१३४), गृहपतिना संयुक्ते (४।४।९०), सनाशंसभिक्ष उः (३।२।१६८), मस्करमस्करिणौ वेणुपरिव्राजकयोः (६।१।१५४) एतेषु ब्रह्मचारि-गृहपतिभिक्षु-परिव्राजकानां चतुर्णांचर्चा विद्यते। एते चत्वार आश्रमा चातुराश्राम्यम् इति पदेन कथ्यन्ते। पाणिनिकाले आश्रमव्यवस्था परमं महत्त्वं भेजे।

## ब्रह्मचारी

यज्ञोपवीतसंस्कारानन्तरं वेदाध्ययनार्थं गुरोराश्रमं गत्वा छात्रः ब्रह्मचर्यव्रतमास्थाय निवसति स्म। इयमेव तस्य ब्रह्मचर्याश्रमसेवा। त्रैवर्णिकाध्येता ब्रह्मचारी वर्णी इत्यप्युच्यते स्म। ब्रह्मचर्याश्रमे त्रैवर्णिकानामेवाधिकारः। ब्रह्मचारिणः कृते कतिपये विशेषा आसन्नियमाः, येषाम्पालनं तेन कर्त्तव्यं भवति स्म, यथा दण्डधारणम्, अग्न्युपासनम्, वेदाध्ययनम्, गायत्रीमन्त्रजपः, गुरुशूश्रूसा, भिक्षाटनं चेति। सामान्यतः द्वादशवर्षम् ब्रह्मचर्यकालः। विशेषपरिस्थितौ न्यूनाधिकभावोपि भवतिस्म।

वेदाध्ययनसमाप्तौ गुरोराज्ञामधिगम्य गृहस्थाश्रमं प्रविविक्षुः स्नातक इत्युच्यते।

## विवाहः

उपाद्यमः स्वकरणे (१।३।५६) इति सूत्रानुसारं विवाहः, उपयमनम्, स्वकरणम् एते पर्यायाः। पत्युः भाविन्याः पत्न्याः पाणेर्ग्रहणे यथाशास्त्रविहिते सति विवाहसंस्कारस्य पूर्णता जायते स्म। नित्यं हस्ते पाणवुपयमने (१।४।७७) इति सूत्रानुसारं सा भार्या पाणिगृहीता भार्या भवति स्म। गृहस्थाश्रमे प्रविष्टो जनो गृहपतिरित्युच्यते स्म।

## स्त्रीशिक्षा

तस्मिन् समये शिक्षाक्षेत्रेपि स्त्रीणाम्पूर्णः प्रवेश आसीदिति चरणसंज्ञकेषु वैदिकशिक्षाकेन्द्रेषु प्रविष्य आसन्निमा अधीयानाः। जातेरस्त्रीविषयात् (४।१।६३) इति सूत्रे कठी, बह्वृची इत्युदाहरणं भाष्ये लभ्यते। कृष्णयजुर्वेदस्य शाखाया एकचरणः कठसंज्ञको विद्यते। कठश्चायं महर्षेर्वेशम्पायनस्यान्तेवासी। कठेन प्रोक्तां शाखामधीयाना कठी भवति, एवमेव बह्वृचेन प्रोक्तां शाखामधीयानां बह्वृची इति। व्याकरणमीमांसादिवेदांगेष्वपि आसन् इमाः कुशला इति पाणिनीया, आपिशला, काशकृत्स्ना इति भाष्योदाहरणैर्विज्ञायते।

## जीविकासाधनम्

तस्मिन् समये जीविकया मुख्यं साधनम् (१) कृषिः, (२) वाणिज्यम्, (३) पशुपालनं बभूव। तत्र कृषिशब्देन सामान्यतः क्षेत्रेषु बीजवपनार्थं हलस्य संचालनमेव बुध्यते, परं भाष्यकृता शब्दस्यास्य व्यापकार्थकत्वं सम्पादितम्। भाष्यकारमते न केवलं विलेखनमेव कृषेरर्थः, अपि तु बीजानांमुचितानां संग्रहणम्, कृषियोग्यबलीवर्दानाम् पालनम्, कर्मकाराणां व्यवस्था तेषाम्भोजनप्रबन्धः, इत्यादिकं सर्वमपि कृष्धातोरर्थः तथा चाह हेतुमति च (३।१।२६) इति सूत्रे भगवान् भाष्यकारः —

> **"नाना क्रियाः कृषेरर्थाः। नावश्यं कृषिर्विलेखने एव वर्त्तते।**
> **किं तर्हि; प्रतिविधानेऽपि वर्त्तते। यदसौ भक्त-बीज-बलीवर्दैः**
> **प्रतिविधानं करोति स कृष्यर्थः।" इति**

रजः कृष्यासुतिपरिषदः (५।२।११२), हलसूकरयोः पुवः (३।२।१८३), हलसीराट्ठक् (४।४।८१), मुण्डमिश्रलक्षण (३।२।२१), विपूयविनीयजित्या (३।१।११७), मतजन-हलात् (४।४।९७), तस्य वापः (५।१।४५), मूलमस्याबर्हि (४।४।८८), किरतौलवने (६।१।४०), खलगोरथात् (४।१।२।५०) इत्यादिसूत्रेषु कृषीवल-हल-हल्य-हलि-कर्ष-वाप-मूलावर्हण-लवन-खल-निष्पावादि-कृषिसम्बन्धिनाम्बहूनां शब्दानामुल्लेखो लभ्यते। कृषिवृत्तिको जनः कृषीवल इत्युच्यते स्म। यस्य सविधे स्वकीयं हलं न भवति सोऽहलिः कृषीबलः, यस्य नूतनं सुन्दरं हलं स सुहलः, एतद्विरुद्धं यस्य पुरातनं, छिन्न-भिन्नं हलं स दुर्हलः कृषीवल इति त्रिविधा भवन्ति स्म कृषकाः क्षेत्रं च हल्य-सीत्यो-पर-गोचर-व्रजादिभेदेन नानविधमासीत्। हलेनकर्षणयोग्यं क्षेत्रं हल्यम्, सीतालाङ्गल-पद्धतिः, तया सम्मितं क्षेत्रम् सीत्यम्। क्षारयुक्तं कृषेरयोग्यं क्षेत्रभूषरम्, यत्र गावश्च-रन्ति तत्क्षेत्रं गोचरभूमिः। ग्रामसमीपदेशे गवादिपशूनां चरणार्थं त्यज्यते स्म भूमिः, येन पशवस्तत्र पोषं प्राप्नुयुः। यत्र च पशवो गवादयो निवसन्ति तत्स्थानं व्रजक्षेत्रम् इत्युच्यते स्म।

क्रय-विक्रयणरूपस्य वाणिज्यस्य कृते व्यवहारशब्दः प्रयुज्यते स्म। पणशब्देन

स्थानीयं क्रयविक्रयणमुच्यते स्म। क्रयविक्रयस्थलं च आपणशब्देन। विक्रयणार्थं स्थापितं वस्तुजातं पण्यम्, क्रय्यम् इत्याभ्यां निर्दिश्यते स्म। क्रयणवृत्त्या यो जीवति स क्रयिकः, विक्रयेण यो जीवति स विक्रयिकः, क्रयेण विक्रयेण च व्यवहरन् क्रयविक्रयिकः (भाषयाम् दलाल) इति इत्युच्यते स्म। काले तस्मिन् प्रायः सर्वेणामेवावश्यकवस्तूनां क्रयविक्रयो जायते स्मेति वाणिज्यमुन्नतावस्थायामासीत्। क्रयविक्रयसाधनं स्वर्ण-रजत-ताम्र-कांस्यादि-धातुनिर्मिता मुद्रा आसन्। वस्तुविनिमयेनापि व्यवहारः प्रचलति स्म।

**पशवः**

पशुपालनेनापि जीविकां निर्वहन्ति स्म तदा। तत्र गावः, बलीबर्दाः, अश्वाः अश्वतराः, खराः, उष्ट्राः, एतेषां पशूनाम्पालनं जायते स्म गजानामपि। भारताद् बहिस्थानादपि अश्वानामायातो भवति स्म। एतेषाम्पशूनां क्रयविक्रयणेन धनोपार्जनं सम्पाद्यते स्म।

## भौगोलिकी स्थितिः राष्ट्रस्वरूपञ्च

महर्षिणा पाणिनिना सूत्रेषु प्राचीनानां ग्राम-नगर-जनपद-प्रदेश-द्वीप-वनपर्वत-नदी-समुद्राणां नामानि निर्दिश्य भूगोलसम्बन्धिनी प्रचुरा प्रामाणिकी च सामग्री गवेषकाणां कृते समुपस्थापिता। एशियामध्यमारभ्य कलिङ्गं यावत्, एवं वर्त्तमानसिन्धप्रदेशाभिन्नसौवीराद् असमप्रदेशीयसूरमसं यावद् प्रसृतस्य भूभागस्य स्थानानां नामानि अत्राष्टाध्याय्यां महाभाष्ये च समुपलभ्यन्ते। अतो ज्ञायते यद्देशोऽयं चतसृष्वपि दिशासु व्यवहाराचारेणासीत् सम्बद्धः। व्याकरणशास्त्रप्रवर्त्तकाश्चेमे मुनयः सर्वेषां देशानां, तत्र व्यवह्रियमाणानां शब्दानां च याथातथ्येन विज्ञा अभूवन्। महाभाष्ये खलु आर्यावर्त्तदेशस्य सीमा निम्नरूपेण वर्त्तते निर्दिष्टा।

"कः पुनरार्यावर्त्तः। प्राग् आदर्शात्, प्रत्यक् कालक वनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम् इति (२।४।१०)।

महाभाष्यकारेण भारतवर्षस्य विभागो दिशाः आधारीकृत्य सम्पादितः वाहीकप्रदेशादग्रे वर्त्तमानं देशम् उदीच्यनाम्ना विन्ध्याद्दक्षिणदिक्स्थं च देशं दक्षिणापथ इति संज्ञया व्यवहरति भाष्यकारः (४।२।१०४)।

पाणिनीयसूत्रेषु च पश्चिमोत्तरदिशि परां प्रसिद्धिं गतायाः कापिशीराजधान्याः, (कापिश्याः ष्फक् ४।२।९९) ततोऽप्युत्तरदिशिवर्त्तमानस्य कम्बोजजनपदस्य (कम्बोजाल्लुक् ४।१।१७५), ततः पूर्वस्मिन् प्रदेशे प्रतिष्ठितस्य कूचवारप्रदेशस्य (तूदीशलातुरवर्मतीकूचवारात् ४।३।९४), तक्षशिलातो दक्षिणपूर्वस्यां दिशि वर्त्तमानस्य मद्रजनपदस्य (मद्रवृज्योः कन् ४।२।१३१), ततो दक्षिणदिशिवर्त्तमानयोः उशीनरशिविजनपदयोः (विभाषोशीनरेषु ४।२।११८), उल्लेखो विद्यते। एवमेव वर्त्तमानपंजाबप्रदेशादुत्तरपूर्वदिक्स्थितस्य, त्रिगर्तदेशस्य दामन्यादित्रिगर्त्तषष्ठात्

(५।३।११६), ततो दक्षिण पूर्वाशायां प्राच्यभरतप्रदेशस्य, समुद्रतटप्रदेशे विद्यमानस्य कलिङ्गस्य, सूरमसस्य, अन्येषां च काशि-कुरु-प्रत्यग्रथादिक्षेत्राणां चर्चापि यथास्थानं दृष्टिपथमवतरति ।

पर्वतेषु हिमवतः, वैशन्तहिमवद्भ्यामण् (४।४।११२), त्रिककुदः, त्रिककुत् पर्वते (५।१।१४७), वैडूर्यमणेरुद्भवस्य विदूरपर्वतस्य, विदूरात् (४।३।८४), वन-गिर्योः संज्ञायां कोटरकिंशुलकादीनाम् (६।३।११७), इति सूत्रीयकिंशुलकादिगणे पठितानां किंशुलकागिरि-शाल्वकागिरि-भंजना गिर्यञ्जनागिरि-लोहितागिरि-कुक्कुटा-गिरि, इति षण्णां गिरीणां संकेत उपलभ्यते । तेषु हिमवान् हिमालय इति नाम्ना प्रसिद्धः, त्रिककुदपि शृङ्गत्रययुतस्य हिमवतः एव कस्यचिद्भागस्य नाम इति प्रतिभाति विदूरश्च दक्षिणदेशस्य बीदरनामकः पर्वतः स्यात् । किंशुलकागणपठितपर्वतानां तु न याथातथ्येन जायते प्रत्ययः ।

वनं पुरगा मिश्रका (८४।४) इति सूत्रे पुरगावणम्, मिश्रकावणम्, सिध्रका-वणम्, शारिकावणम्, कोटरावणम्, अग्रेवणम् इति षण्णां वनानां निरूपणं विद्यते । तत्र गणरत्नमहोदधिकारानुसारम् पुरगावणाम् पाटलिपुत्रनगरसविधे कस्याश्चित् पुरगायक्षिण्या नाम्ना प्रसिद्धिमागतमिदंवनम् इति । मिश्रकावणं च नैमिषारण्यसविधे मिसरिखा इत्येवं परिचीयमानं वनं स्यात् । सिध्रकावणम् इन्धनकाष्ठस्य वनं भवेत् । अग्रेवणं च अग्रजनपदसमीपस्थं वनम् इति सम्भाव्यते । एवमेव शरवणेक्षुवणा-प्लक्ष-वणादीनामन्येषामपि वनानां वर्त्तते सूत्रे समुल्लेखः । एतेषां क्व स्थितिरिति अयं वर्त्तते शोधविषयः ।

भिद्योध्यौ नदे (३।१।११५), उदक्च विपाशः (४।२।७४), सिन्धुतक्षा ४।३।९३), मतौ बह्वचः (६।३।११९), शरादीनां च (६।३।१२०), दाण्डिनायन (६।४।१७४), देविकाशिंशपा (७।३।१), आसंदीवत् (८।२।१२), एतेषु सूत्रेषु भिद्यो-द्ध्यविपाशा-सिन्ध्वजिरवती-शरावती-सरयू-देविकाचर्म्मणवतीत्यासां नवानां नदीनां नामानि दृश्यन्ते । तत्र भिद्योद्ध्योः परिचयो नोपलभ्यते । वर्षाकाले एव प्रकटितस्व-रूपाविमौ नदौ कदाचिल्लुप्तौ भवेताम् । रघुवंशकाव्ये "तोयदागम इवोद्ध्यभिद्ध्ययो-नमिधेयसदृशं विचेष्टितम् ।" (११।८) इत्येवम् उल्लेखो दृश्यते । सिन्धुनदो इदानीं सिन्धनाम्ना प्रसिद्धा । विपाशा पंजाबप्रान्ते व्यासनाम्ना व्यवह्रियमाणा, अजिरवती च राप्ती इति नाम्ना, शरावती कुरुक्षेत्रप्रदेशे घग्घर इतिसंज्ञया प्रवहमाना, सरयू खलु अयोध्यायां वन्दनीयतां गता, देविका च, मद्रप्रदेशे, विन्ध्यप्रान्ते हि चम्बलनाम्ना प्रसिद्धा चर्मण्वती विद्यते । नदीमार्गेण समुद्रमार्गेण च व्यापारो जायते स्म ।

इत्येवं लोकजीवनस्य सम्बन्धिनां सर्वेषामपि पदार्थानां विषयाणां च व्याकरण-शास्त्रे दिग्दर्शनं वर्त्तते येन तात्कालिकस्य लोकजीवनस्य सर्वांगीणं परिचयं याथा-तथ्येन शक्नुमो वयं कर्त्तुमिति संक्षेपः ।

□

# अथर्ववेद में राष्ट्रिय भावना

डॉ० राजेश्वर मिश्र

संस्कृत भाषा के व्याकरण की प्रकृति एवं प्रक्रिया के अनुसार 'राष्ट्र' शब्द की निष्पत्ति दीप्त्यर्थक राज् धातु से हुई है जिसमें औणादिक 'ष्ट्रन्' प्रत्यय जोड़ा गया है।[१]

'राष्ट्र' शब्द राजनीति-शास्त्र का एक अति महत्त्वपूर्ण शब्द है। आँगलभाषी राजनीति-शास्त्रियों ने 'राष्ट्र' शब्द के लिए (Nation) शब्द का प्रयोग किया है। ऋग्वेद एवं अथर्ववेद में राज्य या राजकीय क्षेत्र को 'राष्ट्र' कहा गया है।[२] ऐ० ब्रा० में प्रजा को राष्ट्र कहा गया है[३] और क्षत्र को भी राष्ट्र कहा गया है।[४] क्षत्र शब्द देवों और मनुष्यों द्वारा प्रयुक्त किये जाने वाले राज्य, शासन या शक्ति के अर्थ में सामान्यतः प्रयुक्त है।[५] 'राष्ट्र' का पर्यायवाची शब्द 'राज्य' अथर्ववेद एवं परवर्ती साहित्य में "सार्वभौम सत्ता" के अर्थ में प्रयुक्त हुआ है।[६]

'राष्ट्र'-सम्बन्धी उपर्युक्त सारे अर्थों से यह निष्कर्ष निकलता है कि, जन-समुदाय, सांस्कृतिक, धार्मिक भाषागत जातीय एवं भौगोलिक एकता, राजनैतिक आकांक्षा, आत्मीयता आदि राष्ट्र के मुख्य तत्त्व हैं। इनके आधार पर यह कहा जा सकता है कि जब किसी जनसमुदाय के सदस्य अपने आचार-विचार, रीति-रिवाज, रहन-सहन, जप-तप, पूजा-पाठ; दान-दक्षिणा, तन्त्र-मन्त्र, जादू-टोना, शगुन-अपशकुन, लोक-परलोक, देवी-देवता आदि के विषय में समान धारणाओं के आधार पर पारस्परिक आत्मीयता तथा ऐक्य का अनुभव करते हैं; विभिन्न उप-धर्मों के होते हुए भी किसी मौलिक धर्म के प्रति समानभाव से आस्थावान् रहते हैं; बोलियों और भाषाओं की विविधता होने पर भी एक-एक भाषा और साहित्य पर निष्ठा रखते हैं; अपनी संस्कृति, भाषा, धर्म तथा आत्मसम्मान की रक्षा के लिए वर्तमान राजनैनिक सम्प्रभुता की रक्षा-सुरक्षा की भावना तथा सर्वजनकल्याणकारी स्वतन्त्र राजनैतिक सत्ता प्राप्त करने की भावना रखते हैं तो वह जनसमुदाय एक 'राष्ट्र' के नाम से अभिहित किया जाता है। अपने राष्ट्र की भूमि, जन समूह, संस्कृति, सभ्यता, इतिहास, धर्म, साहित्य, कला, राजनीति, जीवन-दर्शन आदि के प्रति लोगों के मन में गरिमा एवं महिमा के नैसर्गिक स्वाभिमान की भावना को 'राष्ट्रिय भावना' कहा जाता है।

राष्ट्र की भौगोलिक सीमा की सर्वात्मना सुरक्षा एवं रक्षा करने की भावना, राष्ट्र के प्रति सर्वाधिक प्रेम-भावना, राष्ट्र की भौतिक, सांस्कृतिक तथा आध्यात्मिक सम्पदा के प्रति आत्मीयता एवं स्वाभिमान की दृढ़ भावना, राष्ट्र के विकास की निष्ठा, राष्ट्र के किसी भी क्षेत्र विशेष अथवा जनसमूह की प्राकृतिक विपत्ति को अपनी विपत्ति मानकर उसका यथाशक्ति तन-मन-धन से निराकरण करना, राष्ट्र की गरिमा एवं महिमा को प्रतिष्ठित बनाये रखने की अदम्यभावना, किसी अन्य राष्ट्र के प्रति हीनता एवं घृणा की भावना न रखना तथा अन्तर्राष्ट्रिय भावना के प्रचार-प्रसार में क्रियाशील आस्था रखना आदि राष्ट्रिय भावन के कतिपय मौलिक तत्त्व हैं।[७]

संस्कृत भाषा में वाङ्मय का श्री गणेश वेदों के आविर्भाव से होता है। क्योंकि हमारी अति प्राचीन चिन्तन परम्परा का मूल वेद ही हैं। हमारे ऋषियों ने वेदों में मानव जीवन के विविध आयामों के साथ स्वदेश-भक्ति, स्वदेश प्रेम अथवा राष्ट्र-प्रेम के भावों को भी उजागर किया है। क्योंकि उन्हें यह तथ्य भली-भाँति विदित था कि अपनी सामूहिक सम्मान पूर्ण सत्ता के लिए अपनी धरती और देश की तन-मन-धन से सुरक्षा अनिवार्य है। इसके लिए अपने देश और अपनी राष्ट्रभूमि के प्रति निष्ठावान्, उसकी उन्नति के लिए क्रियाशील एवं अस्तित्व की रक्षा के लिए सदैव संगठित रहना परमावश्यक है। यही सोचकर भारतीय ऋषियों ने यहाँ के जनमानस में देशप्रेम अथवा राष्ट्रप्रेम की अदम्य भावना भरने के लिए वेदों में अनेक स्थलों पर अपनी मातृभूमि की मुक्तकण्ठ से प्रशंसा की है।

अपने देश को, अपनी भूमि को माता मानने की भावना सर्वप्रथम वेदों में ही उपलब्ध होती है।[८] इन वेदों में अथर्ववेद का स्थान सर्वोपरि है। क्योंकि इसमें आथर्वण ऋषि ने माता पृथिवी का माहात्म्यगान समस्त पार्थिव पदार्थों की जननी तथा पोषिका के रूप में किया है।[९] अपनी जन्मभूमि के लिए अथर्ववेद में इस ऋषि ने अनेक विशेषताओं का उल्लेख किया है। इन्होंने पृथिवी को सुखदायिनी, अभयप्रदा, निवास प्रदान करने वाली, कल्याणकारिणी तथा आनन्द-स्यन्दिनी और अभीष्ट अन्न, जल, घी, दूध से परिपूर्ण कहकर भूमि के प्रति अपनी रागात्मक आत्मीयता प्रदर्शित की है।[१०] उनका कहना है कि हमारी भूमि सब प्रकार से सम्पन्न है। यहाँ अनेक प्रकार की औषधियाँ पाई जाती हैं।[११] झरने, सरोवर, नद-नदियाँ और सागर जन-जीवन में परमोपयोगी जल की पर्याप्त सम्पूर्ति करते रहते हैं।[१२] उर्वराभूमि पर विविध प्रकार का स्वादिष्ट अन्न उपजता है।[१३] खानें न केवल सोना बल्कि विविध रत्नों से भरी पड़ी हैं।[१४] यहाँ सुन्दर-सुन्दर पंखों वाले हंस, गरुड, मयूर आदि बिहङ्गम भी पाये जाते हैं[१५] तथा ग्रीष्म, वर्षा, शरद, हेमन्त, शिशिर और वसन्त—इन छहों ऋतुओं के सुख एवं लाभ प्राप्त होते हैं।[१६] माता भूमि यथोचित निवास में रहने वाले, विविध

भाषा-भाषी एवं अनेक धर्म एवं सम्प्रदायों के पालक जन-समूह को धारण करती है।[१७] यहाँ उत्पन्न औषधियाँ इसी पृथिवी के गन्ध से सुगन्धित होती हैं।[१८] यही नहीं, इस पृथिवी माता को विश्वम्भरा, वसुधानी, सबकी आश्रयदायिनी कहा गया है।[१९] इस प्रकार अथर्ववेद में भूमि की रमणीयता, सम्पन्नता तथा उपयोगिता का वर्णन राष्ट्र के प्रति आत्मगौरव की भावना का परिचायक है।

वैदिकऋषि अपनी मातृभूमि के प्रति बहुत ही भावुक थे। उनके लिए मातृभूमि ही सर्वस्व थी। वे इसे स्वर्ग और अन्तरिक्ष, माता और पिता तथा देवरूप समझते थे। समाज के पाँचों वर्गों में इसी का रूप देखते थे; इसी को अपना अतीत और भविष्य मानते थे। वे कृतज्ञता के लिए इसका गुणगान करते थे। इसे कल्याणकारिणी माता, पवित्र नियम पालयित्री, विपुल शक्तिदायिनी, नित्यनूतना, सुखदा, योगक्षेमकारिणी और भोजनदायिनी मानते थे। उनका अटल विश्वास है कि सुदृढ़ एवं सुरक्षित नौका से दुर्गम नदी को निर्विघ्न पार करने के समान अपनी सर्वसुखसम्पन्न मातृभूमि में रहकर अपनी जीवन-सरिता को सहज ही पार कर लेंगे। वे अपनी मातृभूमि से प्रचुर भोज्य पदार्थ की कामना से यशोगीत गाते हुए उससे त्रिविध कल्याण के लिए निश्चिन्त होकर[२०] प्रार्थना करते थे कि 'हे मातृभूमि ! तेरे ग्रामों, जंगलों, सभाओं, युद्धों और समितियों में हम तेरे लिए चारु (अच्छा) बोलें।[२१]

अथर्ववेद में राष्ट्र की परिकल्पना अनेकत्र उपलब्ध है। यहाँ मानव समाज के लिए एक आदर्श वृहद्राष्ट्र की प्रार्थना की गयी है।[२२] ऋषिगण अपने मनोनीत नायक के मस्तक पर राष्ट्र-तिलक करते हुए अपने सुरक्षित राष्ट्र-लाभ की हार्दिक कामनायें किया करते थे।[२३] राष्ट्र की प्रतिष्ठा के लिए वे यज्ञ द्वारा देवार्चन किया करते थे।[२४] राजाओं को उपदेश देते थे कि अपने उपलब्ध राष्ट्र की सर्वात्मना सुरक्षा करें तथा सभी प्रजाजनों का पालन करते हुए एकछत्र शासक (एकराट) बनकर विशेष रूप से सुशोभित होइए क्योंकि प्रजानुराग पर ही राज्य की स्थिरता निर्भर है।[२५] अथर्ववेद में "त्वाम् विशो वृणताम् राज्याय"[२६] से प्रजातन्त्र प्रणाली का निर्देश किया गया है। ऋषि लोग अपने राष्ट्र को अक्षुण्ण बने रहने के लिए राजाओं को सीमान्त राजाओं के साथ घनिष्ठ सम्बन्ध बनाकर उनका समर्थन प्राप्त करने के लिये भी उपदेश देते थे।[२७] ऋषि राजाओं को शिक्षा दिया करते थे कि आप लोग सबको समान लाभ प्रदान करें; तेजस्वी बनें; अपराधियों को दण्ड दें; शत्रुओं का दमन करके राष्ट्ररक्षा के कार्य में उग्र रहते हुए प्रजा से संगृहीत धन को उसी के कल्याण-कार्य में विभक्त करें और राजकल्याण के लिए आर्थिक व्यवस्था के प्रति सतर्क रहें।[२८]

राज्य में पुनः प्रतिष्ठित होने वाले राजा के लिए ऋषियों ने आवश्यक तत्त्वों का वर्णन किया है—राजा की प्रेरणा पर अग्नि के समान तेजस्वी दूतों (गुप्तचरों)

का सम्पूर्ण राष्ट्र में अव्याहत गति से भ्रमण; अन्तः प्रकृति अर्थात् रानियों-राजकुमारों आदि को अनुकूल मन वाला (सुमनस) बनाकर अनुशासित करके राष्ट्र-कल्याण के लिए विपुल कर आदि से आर्थिक दशा में सुधार करना;[२९] परिचारकादि को यथोचित पारितोषिक देकर प्रजा के कल्याण के लिए राज-सम्पत्ति का समुचित विभाजन[३०] एवं राष्ट्र-कल्याण के लिए प्रजाओं को अपने-अपने कार्य में नियुक्त करके यज्ञादि धार्मिक कृत्यों का अनुष्ठान आदि।[३१] ऋषियों ने पथ्यभूता, धनवती तथा क्षत्रिय-वैश्यादि भेदों वाली सब प्रजाओं के पारस्परिक सह भाव को प्राप्त करने; आपसी विवाद को स्वयं राष्ट्रपति द्वारा सुलझाने तथा सौमनस्य-पूर्वक राज्य-संचालन करते हुए सौ वर्ष तक राज्य-सुख भोगने की भी शिक्षा राजाओं को दी है।[३२]

अथर्ववेद में राष्ट्र की परिकल्पना मात्र ही नहीं है अपितु उसके आधारभूत तत्त्व, उपयोगिता, महत्ता तथा उसके प्रति लोगों के दायित्वों एवं कर्त्तव्यों का भली-भाँति प्रतिपादन है, जो निश्चय ही उनकी गहन राष्ट्रिय-भावना का द्योतक है। उन्होंने अपनी मातृभूमि को तेज और बल से परिपूर्ण उत्तम राष्ट्र के रूप में प्रतिष्ठित किया[३३] और उसे वे सदैव श्रेष्ठ बनाये रखना चाहते थे। इसीलिए उन्होंने अपने राष्ट्र का विशेषण 'उत्तम' दिया है। राष्ट्र की उत्तमता की सुरक्षा के लिए हमारे वैदिक ऋषियों ने यह उद्घोष किया था कि सत्य, बृहत् (विकास), ऋत (निश्चित नियम, सत्य), उग्रता, दीक्षा, तप, ब्रह्म (मन्त्र) तथा यज्ञ (पवित्र क्रियाएँ) ही अपनी राष्ट्र-भूमि को सुरक्षित बनाते हैं।[३४] जिस देश के नागरिक सत्य के प्रति निष्ठावान् होंगे; देश के सर्वतोमुखी विकास में लगेंगे; नियमानुकूल आचरण करेंगे; अनुशासन प्रिय होंगे; अपने कर्त्तव्य का पालन करेंगे, वह देश अवश्यमेव समृद्धिशाली होगा। इसीलिए ऋषियों ने रोहित ब्रह्म से प्रार्थना करते हुए राष्ट्र को सत्यवादी एवं प्रिय बनाने; राष्ट्र-रक्षा के लिए भरणकर्त्ता को पुष्ट करने;[३५] राष्ट्र में सुव्यवस्था लाने; उसके निवासी प्रजा को दूध और घी आदि पौष्टिक पदार्थों से सम्पन्न करने; राष्ट्र अर्थात् प्रजा को सत्यवाणी से युक्त करने; राष्ट्र के कोश की वृद्धि करके यशस्वी बनाने और राष्ट्र को समृद्ध बनाने का उपदेश दिया है और स्थिर शासन के लिए समर्थ एवं स्थायी मन्त्रिपरिषद् का निर्माण करने का उल्लेख किया है।[३६]

राष्ट्र की अखण्डता एवं प्रगति के लिए वहाँ के निवासियों में परस्पर प्रगाढ़ एकता आवश्यक होती है। इसीलिए राष्ट्र नायक को पाञ्चजन्य[३७] अर्थात् समाज के पाँचों वर्गों—ब्राह्मण, क्षत्रिय, वैश्य, शूद्र और निषाद अर्थात् सब प्रकार के जनों का हित करने वाला कहा गया है। सर्वजन हिताय, सर्वजनसुखाय, दिव्योपम, विशाल तथा कल्याणकारी 'संवेश्य' राष्ट्र की योजना को सफल बनाने हेतु देव-

ताओं से प्रार्थना करते हुए[३८] नागरिक जनों से अपने मन, विचार और क्रियाकलाप में परस्पर मतभेद रखने का उल्लेख किया गया है।[३९] वैदिक ऋषि संगठन के लिए यज्ञ किया करते थे। उसमें जलों की धाराओं के सम्मिश्रण, हवाओं के पुञ्ज और पक्षियों के समूह की संगठनात्मक शक्ति का आह्वान करते हुए सभी को सम्मिलित और संगठित करते थे और वृद्धि हेतु उन्हें प्रेरित करते थे।

राष्ट्रिय विकास हेतु शिक्षा, सम्पर्क, राजस्व, विचार-विमर्श, अधिकार, उद्देश्य आदि सामाजिक, आर्थिक एवं राजनैतिक क्षेत्रों में देश के सभी वर्गों को विकसित करने के लिए ऋषि लोग देशवासियों को आपस में मिलकर चलने; मिलकर बोलने; एक साथ ज्ञान प्राप्त करने; परस्पर सम्पर्क करने; सौमनस्य बनाने; यथा योग्य दायित्व भाग लेने; मिलकर मन्त्रणा करने; समितियों में समान अधिकार समझने; एक साथ मिलकर काम करने आदि का उपदेश दिया करते थे।[४०] उन्होंने सुविधानुसार विभिन्न भाषाओं एवं अभीष्ट धर्म (ईश्वर) की उपासना करते हुए भी समग्र राष्ट्र को अपने घर के समान समझकर राष्ट्र के ऐश्वर्य की आशा की थी[४१] और साथ में भाषाभेद, धर्मभेद, जातिभेद, वर्णभेद तथा प्रान्तभेद आदि को बड़े ही सरल शब्दों में राष्ट्रिय धर्म का विरोधी होने से रोका है। उन्होंने राजनैतिक सौहार्द; सहानुभूति, सव्रतता, सम्यक व्यवहार, संज्ञान आदि की महत्ता व्यक्त करते हुए उदारवाद और लोकतन्त्र को सौमनस्य के द्वारा अनुप्राणित कर पारस्परिक द्वेषभाव को हटाने का उपदेश दिया है।[४२] और सभी मनुष्यों में सद्भावना और मैत्रीभाव के साथ अभयदान का भाव उत्पन्न कर मानसिक और नैतिक उत्कर्ष एवं विकास की कामना की है।[४३] भूमि में रहने वाले सभी छोटे-बड़े लोगों के परस्पर सापेक्ष भाव से वैदिक ऋषियों ने आशा व्यक्त की है कि मातृ-भूमि की कीर्ति फैलेगी और सभी देशवासी खुशहाल होंगे।[४४] समाज के पाँचों वर्गों के जनों में सजातीय भाव भरने के उद्देश्य से ही उन्होंने सभी को मातृ-भूमि की सन्तान एवं उसी के अन्न से पोषित होने की घोषणा की और सभी में एक ही धरती के सन्तान होने का भाव उत्पन्न किया[४५] और कहा कि हमें संगठित रहना चाहिए तथा आपस में द्वेषभाव नहीं रखना चाहिए।[४६]

वैदिक ऋषियों ने देश के प्रमुख-प्रमुख नगरों के साथ अपने देवी-देवताओं का सीधा सम्बन्ध स्थापित करते हुए कहा है कि हमारी मातृभूमि के नगरों का निर्माण हमारे देवताओं ने कराया।[४७] ऐसा कहकर उन्होंने नगरों के प्रति दिव्यता, पवित्रता और तीर्थ-भूमि का भाव जगाते हुए राष्ट्रिय अखण्डता का उल्लेख किया है। उन्होंने देश के अतीत के निर्माण का सम्बन्ध, धार्मिक यज्ञानुष्ठानों द्वारा अपनी देशभूमि की अर्चना करने वाले ऋषियों और मुनियों से स्थिर किया है।[४८] अथर्ववेद में पर्वतों पर भी प्रेमभाव प्रदर्शित किया गया है। इन्हें जलवृष्टि का कारण और वनस्पति से

मनुष्यों का कल्याण करने वाला कहा गया है और शत्रुओं से सुरक्षित रखने की भी कामना की गयी है।[४९] राष्ट्र के वनों (जंगलों) की रक्षा करने का उल्लेख भी इस वेद में किया गया है।[५०]

इसके अतिरिक्त अथर्ववेद के अनेक मन्त्रों में राष्ट्र की समृद्धि के लिए प्रार्थनायें की गयीं हैं—राजा वरुण, देवमन्त्री बृहस्पति आदि देवताओं से स्थिर राष्ट्र के लिए प्रार्थना;[५१] वनस्पति 'वरण मणि' से राष्ट्र एवं उसकी संरक्षिका क्षत्रिय जाति, बल, पशुओं और स्वयं राजा को ओज से सम्पन्न करने तथा राष्ट्र को हानि पहुँचाने वाले व्यक्ति को भाग्य और आयु से वंचित करने की अभ्यर्थना;[५२] यक्ष रूप परमात्मा के पास राष्ट्र की रक्षा के लिए राजा द्वारा उपहार के जाना;[५३] अध्यात्मक व्रात्य (ब्रह्म) के गृहागमन पर आदर-सत्कार (अतिथि सेवा) से राष्ट्र-कल्याण का उल्लेख;[५४] रोहित ब्रह्म से राष्ट्र समृद्धि हेतु प्रार्थना;[५५] वस्त्र की भांति समस्त राष्ट्र का आच्छादक होने का शासक राजा को आशिर्वाद;[५६] दर्भमणि से राष्ट्र-रक्षा करने की प्रार्थना;[५७] सौ वर्ष तक राष्ट्र को भरण-पोषण के लिए औषधि धारण;[५८] देवताओं से राष्ट्र-कल्याण की अभ्यार्थना[५९] तथा कुन्ताप सूक्त मे राजा परिक्षित के राज्य की समृद्धि और सौमनस का उल्लेख करते हुए तदनुरूप समृद्ध राष्ट्र की कामना[६०] आदि राष्ट्रीय भावना के द्योतक हैं। यही नहीं प्राकृतिक पदार्थों अथवा जिस किसी से भी अमंगल की संभावना हो सकती है उन सभी से सार्वभौम आनन्द के लिए समष्टि गत मंगल की प्रार्थना की गयी है।[६१] एवं यथर्ववेद के 'भूमिसूक्त' में एक राष्ट्र-भक्त के मुख से अपनी मातृभूमि के प्रति आदर और प्रशंसा से भरे जो उदात्त भाव व्यक्त कराये गये हैं, उसके आधार पर आजकल की प्रचलित भाषा में इस सूक्त को "मातृभूमि का वैदिक राष्ट्रीय गीत" कहा जा सकता है।

इस समस्त विवेचन से स्पष्ट हो जाता है कि सामान्यतः वैदिक समस्त वाङ्मय, विशेषतः अथर्ववेद राष्ट्रिय भावना के विविध पार्श्वों एवं रूपों के चटकीले चित्रों की अद्भुत-अनुपम चित्र वीथिका है। सचमुच यह बात कितनी विस्मय कारिणी एवं आश्चर्यजनक है कि उस सुदूर अतीत काल में रचित वाङ्मय में भी तत्कालीन ऋषियों-मनीषियों की दृढ़ राष्ट्रिय भावना की ऐसी सुस्पष्ट अभिव्यक्ति हुई थी।

**संदर्भ**

१. सिद्धा०, उणादि प्रकरण, ४.१५८ : सर्वधातुभ्यः ष्ट्रन्।
२. ऋग्वेद, ४.४२.१; ७.३४.११; ६.८४.२; १०.१०९.३; १०.१२४.४ इत्यादि; एवं अथर्ववेद, १०.३.१२; १२.१.८; १३.१.३५।
३. ऐ० ब्रा०, ८.२६ : राष्ट्राणि वै विशः।

४. वही, ७.२२ : क्षत्रं हि राष्ट्रम् ।

५. वैदिक कोश, पृ० ११६ : द्रष्टव्य 'क्षत्र' शब्द ।

६. अथर्ववेद, ३.४.२; ४.८.१; ११.६.१५; १२.३.३१; १८.४.३१ ।

७. दीक्षित, हरिनारायण, संस्कृत साहित्य में राष्ट्रिय भावना, पृ० ३० ।

८. ऋग्वेद, १.८९.४ : तन्माता पृथिवी तत् पिता द्यौ; वही, १.१६४.३३ : बन्धुर्मे माता पृथिवी महीयम्; वही, ५.४२.१६ : मा नो माता पृथिवी दुर्मतो धात् ।

९. अथर्व०, १२.१.१२ : तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रोऽहं पृथिव्या ।

वही, १२.१.६३ : भूमे मातर्निधेहि मा भद्रया सुप्रतिष्ठितम् ।

वही, १२.१.१० : सा नो भूमिर्विसृजतां माता पुत्राय मे पयः ।

वही, १२.१ १५ : त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः·············।

१०. वही, १२.१ १६, १७, ५९ ।

११. वही, १२.१.२ : नानावीर्या ओषधीर्या बिभर्ति पृथिवी···; वही, १२.१.१७ ।

१२. वही, १२.१.३ यस्यां समुद्र उत सिन्धुरापो············।

१३. वही, १२.१.४;४२ : यस्यामन्नं कृष्टयः संबभूवुः, यस्यामन्नं व्रीहियवौ यस्या···।

१४. वही, १२.१.६, २६, ४४ ।

१५. वही, १२.१.५१ : यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि···।

१६. वही, १२.१.३६ : ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।

१७. अथर्व०, १२. १. ४५ : जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् ।

१८. वही, १२. १. २३ : यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः ।

१९. वही, १२. १. ६ : विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी···।

२०. वही, ७. ६. १-४ : अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र···।

२१. वही, १२. १. ५६ : ये ग्रामा यदरण्यं या सभा अधिभूम्याम् ।
ये संग्रामाः समितयस्तेषु चारु बदेम ते ।।

२२. वही, ३. ८. १ : अथास्मभ्यं वरुणो वायुरग्निर्बृहद् राष्ट्रं संवेश्यं दधातु ।

२३. वही, ६. २९. २ : स नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः स्याम ।

२४. वही, ६. ५४. १, २, ३ : इदं तद् युज······मे यजमानाय सुन्वते ।

२५. अथर्ववेद, ३. ४. १ : आ त्व गन्राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट् त्वं विराज ।

२६. वही, ३. ४. २ ।

२७. वही, ३. ४. २ :……त्वामिमाः प्रदिशः पञ्च देवीः । वर्ष्मन्राष्ट्रस्य ककुदि श्रयस्य ।

२८. वही, ३. ४ २ ।……ततो न उग्रो विभजा वसूनि ।
तुलनीय-भागवद्महापुराण: ८ १६. ३७ : धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ।।

२९. अथर्व० ३. ४. ३ : ···· अग्निर्दूतो अजिरः सं चरातै ।
जाया पुत्राः सुमनसो भवन्तु बहुं बलिं प्रति पश्यासा उग्रः ।

३०. वही, ३. ४. ४ : अधा मनो वसुदेयाय कृणुष्व ततो न उग्रो विभजा वसूनि ।

३१. वही, ३. ४ ६ :····· स देवान्यक्षत्स उ कल्प याद्विशः ।

३२. वही. ३. ४. ७ : पथ्या रेवतीर्बहुधा विरूपाः सर्वाः सङ्गत्य वरीयस्ते अक्रन् ।
तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह ।

३३. अथर्ववेद, १२.१.८ : सा नो भूमिस्त्विर्षिं बलं राष्ट्रे दधातूत्तमे ।

३४. वही, १२.१.१ : सत्यं बृहद ऋतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।

३५. वही, १३.१.१ : इदं राष्ट्रं प्रविश सुनृतावत् ।···स त्वा राष्ट्राय सुभृतं बिभर्तु तथा ५, ८, २०, ३४ मन्त्र ।

३६. वही, ६.८८ ३ :···ध्रुवाय ते समितिः कल्पतामिह ।

३७. वही, ४.२३.१ :···पाञ्चजन्यस्य बहुधा यमिन्धते ।

३८. अथर्ववेद, ३.८.१ : ···बृहद्राष्ट्रं संवेश्यं दधातु ।

३९. वही, ३.८.५ : सं वो मनांसि सं व्रता समाकूतीर्नभामसि···।

४०. वही, ६.६४. १–३ : सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम्……
समानमस्तु वो मनो यथा वः सुसहासति ।

४१. वही, १२.१.४५ : जनं बिभ्रत बहुधा विवाचसं नाना धर्माणां पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे दुहां···।

४२. वही, ३.३०.२–३ : अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः……
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा……
वाचं वदत भद्रया ।

४३. अथर्व०, १९.१५.५-६ : अभयं न करत्यन्तरिक्षमभय………मम मित्रं भवतु ।

४४. वही, १२.१.२ : असंबाधं मध्यतो मानवानां………नः प्रथतां राध्यतां नः ।

४५. वही, १२.१.१५, १६ : त्वज्जातास्त्वयि……………पृथिवी धेहि मह्यम् ।

४६. वही, १२.१.१८, २३, २५ : 'मा नो द्विक्षत कश्चन' ।

४७. वही, १२.१ ४४ : यस्याः पुरो देवकृतः ।

४८. वही, १२.१.८ : यां मायाभिरन्वचरन्मनीषिण..................। एवं वही, १२.१.३९ : यस्यां पूर्वे भूतकृत ऋषयो गा उदावृचः । सप्त सत्रेण वेधसो यज्ञेन तपसा सह ।

४९. वही, १२.१.११ : गिरयस्ते पर्वता हिमवन्तोऽरण्यं.. ..... ...............।

५०. वही, ५.१२.१०; ५.२७,११; ८.७.१६ ।

५१. वही, ६.८७.१-२ : मा त्वद्राष्ट्रमधि भ्रशत ।; इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुधारय ।

५२. वही, १० ३.१२ : इमं बिभर्मि वरण......स मे राष्ट्रं क्षत्रं च पशूनोजश्च मे दधत् ।

५३. वही, १०.८.१५ :......तस्मै बलि राष्ट्रभृतो भरन्ति ।

५४. अथर्व०, १०.१०.२ : क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ।

५५. वही, १३.१.३५ : रोहितः संविदानो राष्ट्रं दधातु सुमनस्यमानः ।

५६. वही, १९.२४.१ : तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन ।

५७. वही, १९.३०.३ : त्वामिन्द्रस्याहुर्वर्मत्वं त्वं राष्ट्राणि रक्षसि ।

५८. वही, १९.३७ ३ : अभिभूयाय त्वा राष्ट्रभृत्याय पर्यूहामि शतशारदाय ।

५९. वही, १९.४१.१ : ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ।

६०. वही, २०,१२.७ : सूक्त ।... जनः स भद्रमेधाति राष्ट्रे राज्ञः परिक्षितः ।

६१. वही, १.६.१ : शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ।

एवं वही, १.६.४ : शिवाः नः सन्तु वार्षिकी ।

एवं वही, ६.२३.३ : देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः ।

शं नो भवन्त्वप, ओषधीः शिवाः ।

□

# महाभारत में वर्णित राष्ट्रिय एकता

डॉ० योगेश चन्द्र दुबे

'इदं तु भारतवर्षं यत्र वर्तामहे वयम्'[1]।

महाभारत के इस वाक्य से स्पष्टरूपेण ध्वनित होता है कि हम सभी भारतवासी जिस देश में रहते हैं उसे भारतवर्ष कहा जाता है। यही नहीं, इसके आर्यवर्त आदि नामों के साथ-ही-साथ जम्बूद्वीप का भी संबोधन महाभारत में प्राप्त होता है।[2] इस भारत देश या राष्ट्र के प्रति प्रत्येक देशवासी के मन में अगाध श्रद्धा एव आदर का भाव होना स्वाभाविक है, क्योंकि हमने जिस राष्ट्र या देश में जन्म लिया है, जिस देश की मिट्टी से हमारा शरीर परिपुष्ट हुआ है, जिस देश की जलवायु में हम पनपे हैं, जिसके अन्न, जलवायु तथा अन्याय प्राकृतिक संसाधनों का हम अहर्निश उपभोग कर रहे हैं, उस देश या राष्ट्र के लिए हमारे मनोमस्तिष्क में आदर का भाव, श्रद्धा की भावना और उसकी एकता-अखण्डता, रक्षा-सुरक्षा तथा मानव-मर्यादा की कामना होनी ही चाहिए। इससे प्रत्यक्ष और परोक्ष दोनों ही दशाओं में हमारा ही लाभ है क्योंकि जिस राष्ट्र या देश के निवासियों में अपनी राष्ट्रभूमि, अपनी मातृभूमि के प्रति गौरव की भावना होती है, उसे सदैव सर्वतन्त्रस्वतंत्र एवं सम्प्रभुता सम्पन्न बनाए रखने की अदम्य भावना होती है, उसके शत्रुओं को समाप्त कर देने तथा करते रहने की शक्ति होती है। उसके सर्वतोमुखी विकास की क्रियाशील योजनाएँ रहती हैं। उसकी राष्ट्रीय एकता एवं अखण्डता के लिए सदैव सजग रहना पड़ता है। इसी के फलस्वरूप ही उस राष्ट्र की समस्त संसार में प्रशंसा होती है, प्रतिष्ठा बढ़ती है, कीर्ति का चतुर्दिक विस्तार होता है, उसके नागरिकों को सम्मान मिलता है और विश्व का कोई भी राष्ट्र या देश उसे आक्रान्त करने की कल्पना भी नहीं करता। इसके ठीक विपरीत जिस राष्ट्र के मनुष्यों में राष्ट्रीयता के बीज नहीं होते, राष्ट्रीय भावना तथा राष्ट्रीय एकता एवं अखण्डता के तत्त्व समाहित नहीं होते, उनके मन मे राष्ट्र प्रेम या देशभक्ति नहीं होती वे अपनी मातृभूमि के प्रति आत्मगौरव का अनुभव नहीं करते, ऐसा राष्ट्र कुछ ही दिनों में पराधीनता के पाश में बुरी तरह जकड़ जाता है। फलस्वरूप वहाँ के लोगों का जीवन पशु के जीवन के समान हो जाता है। आक्रान्ता राष्ट्र उस राष्ट्र के नागरिकों का सर्वतोमुखी शोषण करता है। इस दशा में उस राष्ट्र का तथा उस राष्ट्र के व्यक्तियों का संसार में कहीं भी समुचित मान-

सम्मान भी नहीं होता। अतएव प्रत्येक देशवासी को राष्ट्र की सुरक्षा, समृद्धि, उन्नति एवं उसकी एकता तथा अखण्डता के लिए बड़े से वड़ा बलिदान करने के लिए सदैव तत्पर रहना चाहिए, जैसा कि कहा भी गया है कि समूचे कुल की भलाई के लिए एक मनुष्य को त्याग दे गाँव के हित के लिए एक कुल को छोड़ दे तथा देश की भलाई के लिए एक गाँव को त्याग दे।[३]

महाभारत अत्यंत विपुलकाय ग्रंथ है। विषय सामग्री की दृष्टि से तो जो इसमें है वही अन्यत्र है जो इसमें नहीं है वह कहीं नहीं है—**'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत क्वचित्।'** पुनः जहाँ तक इसमें राष्ट्रीय तथा भावना की बात है तो इसके प्रसंग महाभारत में स्थल-स्थल पर दृष्टिगोचर होते हैं। व्यासजी की राष्ट्र-भावना बड़ी ही उदात्त, विशुद्ध तथा ओजस्विनी है। किसी भी राष्ट्र का सर्वाधिक प्रमुख अंग या राष्ट्र का केन्द्र राजा ही होता है। राजा या राष्ट्राध्यक्ष के ऊपर ही सम्पूर्ण राष्ट्र की एकता-अखण्डता, प्रजा या देशवासियों का हित-अहित, सुरक्षा-असुरक्षा, संपदा तथा विपदा आदि आश्रित होता है। अतः जिस देश में हम रहते हैं पहले उसके शासक की योग्यता के विषय में विचार करना अत्यावश्यक होता है। नीति कहती है कि पहले अच्छे राजा को प्राप्त करें, उसके बाद पत्नी और फिर धन की उपलब्धि करें। इन तीनों के संग्रह द्वारा अपने जाति भाइयों तथा पुत्रों को संकट से बचाएँ।[४]

**'राजा प्रमाणं भूतानां'**[५] राजा ही सम्पूर्ण प्रजा के लिए प्रमाण है क्योंकि जिस देश में शासक या राष्ट्राध्यक्ष नहीं होते वहाँ की प्रजा अनाथ होकर नष्ट हो जाती है—**अराजकेषु राष्ट्रेषु प्रजाऽनाथा विनश्यति।**[६] जहाँ राजा नहीं होता वहाँ इज्जत और दौलत दोनों ही खतरे में होती है—**राजन्यसति लोकस्य कुतो भार्या कुतो धनम्।**[७] पुनः वह राजा कैसा होना चाहिए वह राष्ट्र की प्रजा के द्वारा विधिवत् नियुक्त होना चाहिए क्योंकि विधिवत् नियुक्त राजा के बिना राष्ट्र निर्बल होता है।[८]

राजा के आचार-विचार का भी राष्ट्रीय एकता के सन्दर्भों में महत्त्वपूर्ण योग-दान है। राजा यदि कोमल स्वभाव वाला है तो लोग उसकी परवाह नहीं करते और यदि वह तीक्ष्ण स्वभाव वाला है तो लोग उससे उद्विग्न हो उठते हैं। अतः उसे दोनों ही प्रकार के स्वभाव वाला होना चाहिए।[९] यही नहीं जो राजा सत्पुरुषों के मार्ग का अनुयायी होता है, वही राज्य करने योग्य होता है—**सतां वर्त्मानुगस्त्यागी स राजा राज्यमर्हति।**[१०] राजा को क्रोधी स्वभाव का नहीं होना चाहिए। यदि राजा क्रोधी हो जाय तो सारी प्रजाओं का शीघ्र नाश हो जाएगा। अतः क्रोध प्रजावर्ग के नाश और अवनति का कारण होता है।[११]

कुछ ऐसे दुर्गुण हैं जिनसे युक्त राजा स्वयं, प्रजा एवं राष्ट्र के विनाश का हेतु बन जाता है। जो राजा अत्यंत डरपोक, कायर, आलसी, प्रमादी और दुर्व्यसनवश विषयों में फँसा होता है उसे प्रजा अपना स्वामी स्वीकार नहीं करती।[१२] इसी प्रकार

जो राजा कर्त्तव्य-अकर्त्तव्य के अन्तर को जानते हुए भी स्वेच्छाचारिता आदि के कारण प्रजा के साथ पापाचार करते हैं वे अधोमुख हो नरक में जाते हैं। क्योंकि राजा लोग यज्ञ, दान अथवा गुरुसेवन से भी वैसा धर्म (पुण्य) नहीं पाते जैसा कि कर्त्तव्य का ठीक-ठीक पालन करने से प्राप्त करते हैं। जो प्रियजनों तथा द्वेषपात्रों में समानभाव रखते हैं, प्रजाजनों में विवाद आरम्भ हो जाने पर जो राजधर्मासन पर बैठकर प्रत्येक कार्य पर विचार करते हैं वे दोनों लोकों को जीत लेते हैं।[१३]

राष्ट्र की सुरक्षा, एकता एवं अखण्डता के लिए आवश्यक है कि राष्ट्र के बाह्य एवं आन्तरिक शत्रुओं से राजा सदैव सतर्क रहे। कोई कितना ही बलवान राष्ट्राध्यक्ष क्यों न हो उसे अपने दुर्बल शत्रु की भी अवहेलना नहीं करनी चाहिए—'**न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा**।[१४] कोई शत्रु अपने घर में आसन पर बैठा हो तो भी उसे नष्ट करने में नहीं चूकना चाहिए, फिर जो संग्राम में युद्ध करने के लिए खडा हो उसकी तो बात ही क्या—**योऽपि स्यात पीठगः कश्चित् किं पुनः समरे स्थितिः**।[१५] क्योंकि राष्ट्र की रक्षा करना, दस्युओं का दमन करना और राष्ट्र के हित में युद्ध करना राजा का कर्त्तव्य होता है।[१६]

**यदा रक्षति राष्ट्राणि यदा दस्युनपोहति।**
**यदा जयति संग्रामे स राज्ञो धर्म उच्यते॥**

राष्ट्र के रिपु विघटन कराकर तथा प्रलोभन देकर राष्ट्र की इकाइयों को अपने पक्ष में कर लेते हैं—**भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिर्गुणाः**।[१७] अतः राजा को चाहिए कि वह अपने विश्वस्त व्यक्तियों द्वारा शत्रु लोगों में परस्पर भेदभाव और वैर-विरोध उत्पन्न कराता रहे—**आप्तैर्मनुष्यौरुपचारयेत पुरेषु राष्ट्रेषु च संप्रयुक्तान**।[१८] शासक को सदैव अपने राष्ट्र की ओर पराये राष्ट्र की शक्तियों की जानकारी रखनी चाहिए--**स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः**।[१९] राजा को अत्यंत बुद्धिमत्तापूर्वक राष्ट्र की रक्षा करनी चाहिए क्योंकि सब प्रकार से सुरक्षित राष्ट्र को ही शत्रु नष्ट नहीं कर पाते--**राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते**।[२०] राष्ट्र की रक्षा के लिए कुछ भी करना श्रेयस्कर है। उसकी रक्षा के लिए किसी का वध करने में भी पाप नहीं है, क्योंकि महाभारत में एक स्थल पर कहा गया है कि एक को मारकर वंश की रक्षा करनी चाहिए और वंश को मारकर राष्ट्र की रक्षा करना भी बुरा काम नहीं है—[२१]

**एकं हत्वा यदि कुले शिष्टानाम स्यादनामयम्।**
**कुलं हत्वा च राष्ट्रं च न तद् वृत्तोपघातकम्॥**

शत्रुओं या दूसरे राष्ट्रों का नाश करने के लिए जिस प्रकार प्रयत्न किया जाता है उसी प्रकार की तत्परता अपने राज्य की रक्षा के लिए भी करना चाहिए—[२२]

**स एव यत्नः क्रियते परराष्ट्रविमर्दने।**
**स एव यत्नः कर्तव्य स्वराष्ट्र परिपालने ।।**

राजा को चाहिए कि वह धर्माचरण में प्रवृत्त रहे क्योंकि जहाँ राजा धर्म के अनुसार आचरण करते हैं वहाँ वे सब शत्रुओं को नष्ट कर देते हैं और उनका राज्य भी बढ़ता रहता है—[२३]

**यत्र धर्मेण वर्तन्ते राजानो राजसत्तम्।**
**सर्वान् सपत्नान् बाधन्ते राज्यं चैषां किवर्धते ।।**

किंवा, राजा को चाहिए कि वह धर्म से ही राज्य प्राप्त करे, और धर्म से ही उसकी रक्षा करे क्योंकि धर्ममूलक राजलक्ष्मी को पाकर न तो राजा उसे छोड़ता है, न वही राजा को छोड़ती है—[२४]

**धर्मेण राज्यं विन्देत धर्मेण परिपालयेत्।**
**धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ।।**

किसी भी देश या राष्ट्र की एकता, अखण्डता एवं समृद्धि, के परिचायक तत्त्वों को उस राष्ट्र के सातों अंगों या सातों प्रकृतियों में स्पष्ट रूप से देखा जा सकता है। उस राष्ट्र का स्वामी कैसा है, उसके सचिव कैसे हैं, मित्र कैसे हैं, कोष की क्या स्थिति है, दुर्ग एवं सैन्य की व्यवस्था कैसी है आदि महत्त्वपूर्ण अंग हैं जिससे किसी राष्ट्र के विषय में सम्यक्रूपेण जाना जा सकता है। यद्यपि महाभारत के अन्तर्गत स्थल-स्थल पर इनके विषय में स्पष्ट उल्लेख किया गया है किन्तु इनकी समग्र जानकारी के लिए केवल, नारद और युधिष्ठिर के उस प्रसंग को प्रस्तुत किया जा रहा है जिसमें नारद युधिष्ठिर से उनके राष्ट्र के बहुविध उन्नति, विकास एवं सुरक्षा आदि के विषय में पूँछते हैं—[२५] भरत श्रेष्ठ ! क्या तुम राजोचित छः गुणों के द्वारा, सात उपायों की, अपने और शत्रु के बलाबल की तथा देशपाल एवं दुर्गपाल आदि चौदह व्यक्तियों की भलीभाँति परख करते हो। तुम्हारे मन्त्री आदि सात प्रकृतियाँ कहीं शत्रुओं से मिल तो नहीं गयी। मन्त्र को गुप्त रखने वाले उन शास्त्रज्ञ सचिवों द्वारा तुम्हारा राष्ट्र सुरक्षित तो है न। तुम्हारे राज्य के किसान-मजदूर आदि श्रमजीवी मनुष्य तुमसे अज्ञात तो नहीं, उनके कार्य और गतिविधि पर तुम्हारी दृष्टि है न ? तुम्हारे यहाँ जो शिक्षा देते हैं वे धर्म एवं सम्पूर्ण शास्त्रों के मर्मज्ञ विद्वान होकर ही राजकुमारों तथा मुख्य-मुख्य योद्धाओं की सब प्रकार की आवश्यक शिक्षाएँ देते हैं न। कठोर दण्ड के द्वारा तुम प्रजा में उद्वेग तो नहीं डालते। मन्त्री लोग तुम्हारे राज्य का न्यायपूर्वक पालन करते हैं न। अपनी सेना के लिए यथोचित भोजन और वेतन ठीक समय पर दे देते हो न। सेना के मुख्य दलपति सब प्रकार के युद्ध में चतुर, निष्कपट एवं पराक्रमी हैं न। तुम्हारे स्वामीभक्त मनुष्यों द्वारा ही तुम्हारे धन-

भण्डार, अन्न-भण्डार, वाहन, प्रधान द्वार, अस्त्र-शस्त्र तथा आय के साधनों की रक्षा एवं देखभाल की जाती है न। तुम्हारे नगर तथा राष्ट्र के निवासी संगठित होकर तुम्हारे साथ विरोध तो नहीं करते हैं।

इस प्रकार किसी भी राष्ट्र की उन्नति में कौन-कौन से सहायक तत्त्व हैं तथा उसके विनाश में कौन-कौन से कारक हैं आदि बातों का समुचित प्रतिपादन उपयुक्ति अंशों में भली-भाँति किया गया है। इसी सन्दर्भ में पुनः यह कहना न भूलेंगे कि यदि राजा प्रजा का पालन नहीं करे तो प्रजा ही एक दूसरे को न खा डालेगी, प्रत्युत वेदत्रयी का भी अस्तित्व लुप्त हो जाएगा और विश्व को धारण करने वाला धर्म ही रसातल में डूब जाएगा।[२६] राजधर्म के विगड़ने पर समाज तथा राष्ट्र का सर्वनाश हो जाता है। राजनीतिक नेता के लिए महाभारत एक विलक्षण आदर्श प्रस्तुत करता है, जो आज भी उतने ही सुन्दर रूप से अनुकरणीय तथा ग्राह्य है। भारतवर्ष कृषि-प्रधान राष्ट्र है। अतः व्यास जी का आग्रह है कि जो राजनैतिक नेता स्वयं अपने हाथों से कृषि नहीं करता, खेत नहीं जोतता-बोता उसे नेता बनकर राष्ट्र की समिति में जाने का अधिकार नहीं होता—[२७]

**'न नः समिति गच्छेद् यश्च नो निर्वपेत् कृषिस्।'**

किसी भी राष्ट्र की उन्नति का परिचायक तत्त्व, उस राष्ट्र के लोगों में परस्पर स्नेह-प्रेम, भ्रातृत्व-भावना, आपसी मेलजोल तथा एकता एवं अखण्डता है। ये सारी चीजें तभी संभव हैं जब आपस में कलह, द्वेष, लड़ाई-झगड़े, दंगे, विवाद एवं युद्धादि के प्रसंगों का सम्पूर्ण राष्ट्र में सर्वथा अभाव हो। जैसा कि युद्ध की विभीषिका के विषय में महाभारत में एक स्थल पर कहा गया है कि—जिसमें सबका विनाश दिखाई देता है, जो नरक का हेतु है, जिससे पूर्णतः पाप का उदय होता है, जिसके अन्त में अभाव ही हाथ लगता है और जिसमें जय तथा पराजय दोनों समान हैं, उस युद्ध जैसे कठोर कर्म के लिए कौन समझदार मनुष्य कभी उद्योग करेगा।[२८] जिन्होंने जाति और कुटुम्ब के लिए हितकर कामों का साधन किया है वे धन्य हैं। वे ही पुत्र मित्र तथा बान्धव कहलाने योग्य हैं।

आपसी मेल जोल एवं भाई चारे के लिए आवश्यक है कि शराब पीना, कलह, समूह के साथ वैर, पति-पत्नी में भेद पैदा करना, कुटुम्ब वालों में भेदबुद्धि उत्पन्न करना, राजा के साथ द्वेष, स्त्री और पुरुष के विवाद और बुरे रास्ते—ये सब त्याग दिया जाय।[२९] जिस राष्ट्र के लोगों में उपर्युक्त कलह, भेदभाव एवं विरोध आदि की भावना नहीं रहती वहीं पर एकता एवं अखण्डता का दर्शन होता है। आपस में फूट रखने वाले लोग अच्छे बिछौनों से युक्त पलंग पाकर भी कभी सुख की नींद नहीं सोने पाते, उन्हें स्त्रियों के पास रहकर तथा सूत मागधों द्वारा की हुई

स्तुति सुनकर भी प्रसन्नता नहीं होती ।[१०] जो परस्पर भेदभाव रखते हैं वे कभी धर्म का आचरण नहीं करते । वे सुख भी नहीं पाते । उन्हें गौरव नहीं प्राप्त होता तथा उन्हें शान्ति की वार्ता भी नहीं सुहाती ।[११]

राष्ट्रिय एकता-अखण्डता एवं पारस्परिक सद्भावना के विषय में उद्योग पर्व के ही एक अन्य स्थल पर विदुर और धृतराष्ट्र के संवाद में देखा जा सकता है। विदुर जी धृतराष्ट्र से कहते हैं--भरत श्रेष्ठ ? जलती हुई लकड़ियाँ अलग-अलग होने पर धुआँ फेंकती हैं और एक साथ होने पर प्रज्ज्वलित हो उठती हैं । इसी प्रकार जाति-बन्धु भी आपस में फूट होने पर दुःख उठाते हैं और एकता होने पर सुखी रहते हैं । इसी प्रकार पुनः कहते हैं कि यदि वृक्ष अकेला है तो वह बलवान, दृढ़मूल तथा बहुत बड़ा होने पर भी एक ही क्षण में आँधी के द्वारा बलपूर्वक शाखाओं सहित धराशायी किया जा सकता है, किन्तु जो बहुत से वृक्ष एक साथ रहकर समूह के रूप में खड़े हैं, वे एक दूसरे के सहारे बड़ी से बड़ी आँधी को भी सह सकते है । इसी प्रकार समस्त गुणों से सम्पन्न मनुष्य को भी अकेले होने पर शत्रु अपनी शक्ति के अंदर समझते हैं, जैसे अकेले वृक्ष को वायु । किन्तु परस्पर मेल होने से और एक दूसरे को सहारा मिलने से जाति वाले लोग इस प्रकार वृद्धि को प्राप्त होते हैं, जैसे तालाब में कमल ।[१२] यही नहीं, जो लोग अपने भले की इच्छा करते हैं उन्हें अपने जाति भाइयों को उन्नतिशील बनाना चाहिए । जाति भाइयों के साथ परस्पर बात-चीत, भोजन एवं प्रेम करना ही कर्त्तव्य है, उनके साथ कभी विरोध नहीं करना चाहिए । शुभ चाहने वाले को अपने जाति-भाइयों के साथ झगड़ा नहीं करना चाहिए, बल्कि उनके साथ मिलकर सुख का उपभोग करना चाहिए ।[१३] यही है महाभारत की राष्ट्रिय भावना, यही है राष्ट्र के उन्नायक तत्त्वों का संक्षिप्त परिचय, यही है महाभारत का राष्ट्र संदेश एवं राष्ट्रिय तत्त्व तथा यही है महाभारत में वर्णित राष्ट्रिय एकता एवं अखण्डता का स्वर ।

## संदर्भ

१. भीष्मपर्व, अध्याय १२, श्लोक ५२

२. यस्य नाम्ना त्विदं द्वीपं जम्बूद्वीपमिति श्रुतम् । सभापर्व, अध्याय २८, श्लोक ६

३. त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।।–सभा०, अध्याय ६८, श्लोक ११

४ राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
त्रयस्य संचयेनास्य ज्ञातीन पुत्रांश्च तारयेत् ।।
आदिपर्व, अध्याय १५६, श्लोक ११-१२

५. **आदिपर्व**, अध्याय ८२, श्लोक १८
६. **आदिपर्व**, अध्याय १०४, श्लोक ४४
७. **शान्तिपर्व**, अध्याय ५७, श्लोक ४१
८. **शान्तिपर्व**, अध्याय ६७, श्लोक २
९. **शान्तिपर्व**, अध्याय ५६, श्लोक २१
१०. **शान्तिपर्व** अध्याय ५७- श्लोक ३८
११. **वनपर्व**, अध्याय २९, श्लोक ४,५
१२. **वनपर्व**, अध्याय २५१, श्लोक ५
१३. **विराटपर्व**, अध्याय १६. श्लोक २१
१४. **विराटपर्व**, अध्याय २२, श्लोक २३
१५. **विराटपर्व**, अध्याय २२, श्लोक २४
१६. **शान्तिपर्व**, अध्याय ९१, श्लोक ३४
१७. **शान्तिपर्व**, अध्याय १०७, श्लोक ३१
१८. **शान्तिपर्व**, अध्याय १०३, श्लोक ४१
१९. **विराटपर्व**, अध्याय २९, श्लोक ६
२०. **सभापर्व**, अध्याय ५, श्लोक २८
२१. **शान्तिपर्व**, अध्याय ३३, श्लोक ३१
२२. **उद्योगपर्व**, अध्याय ३४, श्लोक ३०
२३. **वनपर्व**, अध्याय ९४, श्लोक १५, १६
२४. **उद्योगपर्व**, अध्याय ३४, श्लोक ३१
२५. **सभापर्व**, अध्याय ५, श्लोक २०–१२९
२६. **शान्तिपर्व**, अध्याय ६८
२७. **उद्योगपर्व**, अध्याय ३६, श्लोक ३१
२८. **उद्योग पर्व**, अध्याय २५, श्लोक ७
२९. **उद्योग पर्व**, अध्याय ३५, श्लोक ४३
३०. **उद्योग पर्व**, अध्याय ३६, श्लोक ५५
३१. **उद्योग पर्व**, अध्याय ३६, श्लोक ५६
३२. **उद्योग पर्व**, अध्याय ३६, श्लोक ६०-६५
३३. **उद्योग पर्व**, अध्याय ३९, श्लोक १८-२४

□

# संस्कृत-राष्ट्रवाणी

उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे ।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ।।
नवयोजनसाहस्रो विस्तारश्च द्विजोत्तमाः ।
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ।।
महेन्द्रो मलयश्चैव सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ।।
इतः स्वर्गश्च मोक्षश्च मध्यं चान्ते च गच्छति ।
न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ।।

× × ×

इज्यायुद्धवाणिज्यादि वृत्तिमन्तो व्यवस्थिताः ।
शतद्रु चन्द्रभागाद्या हिमवत्पाद-विनिःसृता ।।
तापि-पयोष्णी-निर्विन्ध्या-कावेरी-प्रमुखापगाः ।
ऋक्षपादोद्भवा ह्येताः श्रुताः पापं हरन्ति याः ।।
गोदावरी-भीमरथी-कृष्णवेण्णादिकास्तथा ।
सह्य पादोद्भवा नद्यः स्मृताः पापभयापहाः ।।
कृतमाला ताम्रपर्णीप्रमुखा मलयोद्भवाः ।
त्रिसान्ध्य-ऋषि कुल्याद्या महेन्द्रप्रभवाः स्थिताः ।
ऋषिकुल्या कुमाराद्याः शुक्तिमत्पादसम्भवाः ।।
आसां नद्युपनद्यश्च सन्त्यन्यास्तु सहस्रशः ।।

× × ×

आसां पिबन्ति सलिलं वसन्ति सरितां सदा ।
समोपेता महाभागा हृष्टपुष्टजनाकुलाः ।।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः ।
दानानि चात्र दीयन्ते परलोकार्थमादरात् ।।
पूरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ।
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ।।

अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्म भूरेषा यतोऽन्या भोगभूमयः ॥
अत्र जन्म सहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्य सञ्चयात् ॥

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषा मनुष्याः ॥
जानीम नो तत् तु वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्यन्ति धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीनाः ॥

—[ब्रह्मपुराणे, १९।१-२७]

एवं तु भारतं वर्षं नवसंस्थान संस्थितम् ।
दक्षिणे परतो यस्य पूर्वे चैव महोदधिः ॥
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः ।
तदेतद् भारतं वर्ष सर्वबीजं द्विजोत्तमाः ॥

× × ×

देवानामपि भो विप्राः सदैवैष मनोरथः ।
अपि मानुष्यमाप्स्यामो देवत्वात् प्रच्युताः क्षितौ ॥

× × ×

न भारतसमं वर्षं पृथिव्यामस्ति भो द्विजाः ।
यत्र विप्रादयो वर्णाः प्राप्नुवन्त्यत्रि वाञ्छितम् ।
धन्यास्ते भारते वर्षे जायन्ते ये नरोत्तमाः ।
धर्मार्थकाममोक्षाणां प्राप्नुवन्ति महाफलम् ॥

प्राप्यते यत्र तपसः फलं परमदुर्लभम् ।
सर्वदानफलं चैव सर्व यज्ञफलं तथा ॥
तीर्थयात्राफलं चैव गुरुसेवाफलं तथा ।
देवताराधनफलं स्वाध्यायस्य फलं द्विजाः ॥
यत्र देवाः सदा हृष्टाः जन्म वाञ्छन्ति शोभनम् ।
नानाव्रतफलं नानाशास्त्रफलं तथा ॥

× × ×

प्राप्यते भारते वर्षे न चान्यत्र द्विजोत्तमाः ।
कः शक्नोति गुणान् वक्तुं भारतस्याखिलान् द्विजाः ॥

—[ब्रह्मपुराणे, २७।६५-७८]

उत्तरं यत् समुद्रस्य हिमाद्रे श्चैव दक्षिणम् ।

.......................................... ...............

प्राप्स्यामो धन्याः खलुते मनुष्याः ये भारते नेन्द्रियविप्रहीनाः ।।

—[विष्णुपुराणे, २।३।१-२६]

क्षीरोदधेरुत्तरं यद् हिमाद्रेश्चैव दक्षिणम् ।
ज्ञेयं तद् भारतं वर्षं सर्वकामफलप्रदम् ।।

× × ×

अत्रापि देवा इच्छन्ति जन्म भारतभूतले ।
कदा पुण्येन महता प्राप्स्यामः परमं पदम् ।।

× × ×

सम्प्राप्य भारते जन्म सुकर्मसु पराङ्मुखः ।
पीयूषकलशं व्यक्त्वा विषभाण्डं स मार्गति ।।

× × ×

एवं भारतभूभागं प्रशंसन्ति दिवौकसः ।
सनत्कुमारब्रह्माद्याः स्वभोगक्षयभीरवः ।।
तस्मात् पुण्यतमो ज्ञेयः सर्वकर्मफलप्रदः ।
भारताख्यो महाभाग देवानामपि दुर्लभः ।।

—[बृहन्नारदीयपुराणे, ३।४६।७४]

भारतं नाथ यद् वर्षं दक्षिणेन मयोदितम् ।
तत्कर्मभूमिर्नान्यत्र सम्प्राप्तिः पुण्यपापयोः ।।
एतत् प्रधानं विज्ञेयं यत्र सर्वं प्रतिष्ठितम् ।।

—[मार्कण्डेय पुराणे, ५५।२१-२२]

एतत तु भारतं वर्षं चतुःसंस्थानसंस्थितम् ।
दक्षिणपरतो ह्यस्य पूर्वेण च महोदधिः ।।
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः ।
तदेतद् भारतं वर्षं सर्वबीजं द्विजोत्तम ।।

× × ×

देवानामपि विप्रर्षे सदैवेष मनोरथः ।
अपि मानुष्य माप्स्यामो देवत्वात् प्रच्युताः क्षितौ ।।
मनुष्यः कुरुते तत् तु यन्न शक्यं सुरासुरैः ।।

—[मार्कण्डेय पुराणे, ५७।५८-६३]

मानुष्यं भारते वर्षे त्रयोदशसु जातिषु ।
सम्प्राप्य म्रियते तीर्थे पुनर्जन्म न विद्यते ।।
अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका ।
पुरी द्वारावती ज्ञेयाः सप्तैताः मोक्षदायिकाः ।।

—[गरुड़पुराणे, उत्तरखण्डे, २८।२-३]

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गस्य फलार्जनाय भवन्ति भूयः पुरुषाः सुरत्वात् ।।

—[गरुड़पुराणे, उत्तरखण्डे, १।६

हिमाद्रेर्दक्षिणं वर्षं भरताय न्यवेदयत् ।
तस्मात् तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ।।

—[लिङ्गपुराणे, पूर्वार्धे, ४७।१९]

दुष्यन्तस्य तु दायादो भरतो नाम वीर्यवान् ।
स सर्वदमनो नाम नागायुतवलो महान् ।।
चक्रवर्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः ।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम् ।।

—[ब्रह्मपुराणे १३।५६, ५७]

पितुस्तुल्यकृतं राज्यं दुष्यन्तस्तनयस्ततः ।
शकुन्तलायां तस्माच्च भरतो नाम भूपतिः ।।
पितुस्तुल्यं कृतं राज्यं दुष्यन्तः स्वर्गतिं गतः ।
भरतो नाम तत्पुत्रो देवपूजन तत्परः ।
महामाया प्रभावेण षट्त्रिंशद्वर्ष जीवनम् ।
षट्त्रिंशाब्दसहस्राणि नृपायुर्वर्धितं तथा ।
तस्य नाम्ना स्मृतः खण्डो भारतो नाम विश्रुतः ।
तेन भूमे विभागश्च कृतं राज्यं पृथक् चिरम् ।।

—[भविष्यपुराणे प्रति सर्ग पर्वणि ३।३०-३६]

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ।।
यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ।।

—[कुमारसम्भवे १।१, २]

वर्षेषु यद् भारतमार्य धुर्याः स्तुवन्ति गार्हस्थमिवाश्रमेषु ।
तत्रास्मि पत्युर्वरिवस्ययेह शर्मोर्मिकिर्मीरित धर्मलिप्सुः ॥
स्वर्गे सतां शर्म परं न धर्मा भवन्ति भूमाविह तच्च ते च ।
शक्या मखेनापि मुदोऽमराणां कथं विहाय त्रयमेकमीहे ॥
साधोरपि स्वः खलु गामिताधो गमी स तु स्वर्गमितः प्रयाणे ।
इत्यायती चिन्तयतो हृदि द्वे द्वयोरुदर्कः किमु शर्करे न ?

—[नैषधीयचरिते, ६।१७-६६]

## भारतगीतिका

अत्रं भारतीया मतानां विभेदैरलं देशभेदेन वैरेण चालम् ।
अयं शाश्वतो धर्म एको, धरायां न सम्भाव्यते धर्मतत्त्वेषु भेदः ।
दया भूतसंघे मतिर्देवदेवे चतुर्वर्ग चिन्ता विरोधाद् विरामः ।
मनःकाय वाक्शोधने चैत्र वुद्धिः परं धर्मतत्त्वं विरोधोऽत्र केषाम् ॥

नराः सर्व एवैकमीशं भजन्ते ईशः परं नाम भेदेन भिन्नः ।
समुद्भासितो धर्म एतेन चैकः विचिन्त्येति को वर्ततां भेदवादे ॥
कलिङ्गाङ्गवङ्गान्ध्रकद्राविडादीनुपाधीन् विहृयैक्यमालम्ब्यभूः ।
अये भारतीयाः पुरेवात्मरूपं लभध्वं यशश्चन्द्रशुभ्रं तनुध्वम् ॥

गिरं संस्कृतां राजकीयां च वाणीं समभ्यस्य लोकद्वयस्यापि सौख्यम् ।
वशे स्थापयध्वं स्वधर्मं स्वदेशं तथा प्रापयध्वं पुनर्गौरवं तत् ॥
चतुर्वर्गमूलं सुर्वाद्येति मत्वा स्वदेशीय विद्यालयानामुदारम् ।
विधायोन्नतिं शिल्पशास्त्रादिशिक्षां प्रचारं भृशं भारते वर्तयध्वम् ॥

अकृत्वा मतिं दोष जाते परेषां विशुद्ध्यै स्वदोषस्य भूयो यतध्वम् ।
स्वदोषे जनैः शोधिते नावकाशः क्वचिद् दोषजातस्यभावीति मत्वा ॥
वचः सर्वतः सत्यमङ्गीकुरुध्वं न चासत्यमुद्घोषितं ब्रह्मणापि ।
चरित्रं भृशं सत्यपूतं तनुध्वं मतिं सर्वभूतावने वर्तयध्वम् ॥

पुरामुष्मिकं चैहिकं भारतीयाः सुखं विद्यया साधितं पूर्वजैर्वः ।
उपेक्ष्याद्य विद्याममुं भोजनार्थं परेषां मुखापेक्षिणो हा भवन्तः ॥
जनैरैहिकामुष्मिकार्थक्षमासु प्रवृत्तिं विहाद्य विद्यासु मोहात् ।
श्रमं शुष्कवादेषु कुर्वद्‌चिरे तैः कथं याप्यते जीवनं दास्यकृत्ये ॥

श्रुतौ दर्शने ज्योतिषे धर्मशास्त्रे पुराणेतिहासेचिकित्साविधौ च ।
तथैवोपयुक्तेषु विद्यान्तरेषु प्रवृत्तिं तनुध्वं विवादान् विहाय ॥

समभ्यस्यदेशान्तरीयाश्च भाषाः समाहृत्य विज्ञान तत्त्वानियुक्त्या ।
गिरा दिव्यया संस्कृतानि प्रकामं स्वदेशीयभाषासु सञ्चारयध्वम् ।।

—म० म० पं० रामावतारशर्मणः

## भारतम्

निःस्वं निरात्म विश्वमिदं पाति भारतम् ।
मैत्रीस्पृशा दृशास्ति जितारातिं भारतम् ।।
आधाय धवलधारमुरसि तारहारवत् ।
गङ्गातरङ्गभङ्गशिवं भाति भारतम् ।।

पुष्पं न यद् विकासभितं गन्धवद् भुवि ।
तस्मै स्पृहां प्रदर्श्य न माति भारतम् ।।
दूर्वापि चन्दनायते काशोऽपि कुशसमः ।
उच्चावचं परीक्ष्य पुरो याति भारतम् ।।

विज्ञानमानदृप्तमतृप्तं सृतं जगत् ।
जीवातुमखिल तर्पणं प्रददाति भारतम् ।।
अग्रेसरं मनो निधायन्यस्यते पदं ।
जागर्ति जनः प्रेक्षते, प्रीणाति भारतम् ।।

—जानकीवल्लभशास्त्रिणः

## गीति

एहि रणं नो मरणं चिन्तय ।

उच्छृङ्खल-खल-शत्रु-समूहे
खेल तरणिरिव तिमिर व्यूहे
अश्रुकलापकलितदृग्दीनां
जननीं निगडबन्धनान्मोचय ।।

एहि रणं नो मरणं चिन्तय ।

रक्ष पयःपानस्य व्रीडां
स्मर शिशुताया अङ्कक्रीडाम् ।
वसुमोषाणामाशु कृपाणैः
छिन्धि शिरांसि करौ ननु कृन्तय ।।

एहि रणं नो मरणं चिन्तय ।

त्वयि जीवति यदि रोदिति माता
किमिति विनिर्मितवांस्त्वां धाता ?
कथय तवान्तर्द्रवति न सैनिक
सत्त्वरमपि परवशतामन्तय ॥

एहि रणं नो मरणं चिन्तय ।

—रामनाथपाठक–'प्रणयिनः'

[राष्ट्रवाणी (१६५२) इति सङ्कलनात्]

## शङ्खनादः

वारणतारकण्टकासक्तास्ते बत मानवदेहाः ?
मानवदेहानध्यासीना हन्त विलुब्धा गृद्धाः ।
व्यग्रं लुठन्ति शिरांसि तानि ते शवाः कृतकरपादाः ।

एकं तन्मृतनग्नाङ्गं निष्प्रच्छदमातपशीर्णम् ।
घोरपगृध्राणामेकं कवलमहहा रक्तच्युतिदिग्धम् ॥

एकं प्रेतवनं तद् यत्र न कश्चिच्छोकालापी ।
एको भ्राम्यन्नात्मा यस्य न गेहः कोऽपि क्वापि ॥

ध्वंसयितव्यो मृत्युः पालयितव्यो चितया प्रसादः ।
स्रष्टव्यो नवसर्गोलोकः कार्यो गतावसादः ॥

अभिशापैर्जीवन्तो यूयं देशप्रेममधून्मत्ताः
शरगृहं रे करे कुरुध्वं वीरा योद्धारो दृप्ताः ।

अटलक्रान्तेर्गायत गीतं प्रलयताण्डवं मण्डयत
शान्तं गगनं विशोभयत द्विषतां हृदयं कम्पयत ॥

स्वतन्त्रतासम्मदमत्ता बलिवेदी वर्त्मध्वन्या रे !
कथं न बिभियाद् वोऽरिजनः शिरसा धृतमतिशीर्षण्यारे ?

अद्य निशायामाशायाः पुनरपि निःसृजत सञ्चारम्
वन्दिनो भङ्क्त कारागारम् ॥

— हरिदत्त पालीवाल–'निर्भयस्य'

[शङ्खनादे, पृ० १८०]

## जागर्ति कीर्तिः

वीर, ते जागर्ति कीर्तिर्वीर, ते जागर्ति
धूतसितिमा शोणितश्रियमुल्बणां बरिभर्ति ।।
धूमधारां दुद्विषद्वक्त्रेषु परि सरिसृष्टि
सैव देश-विभावरी-ज्योत्स्नापदं पोपुष्टि ।।

सैव काल-निशावसानायादेयं चरिकर्ति
सैव रिपु हविषे ज्वलन्ती हृत्सु परिचर्चर्ति ।।

दूरपारेऽन्धे , वनेऽन्धीभूय धूकास्तद्भयात् ।
वीर रे, विपलाय्य लीना भारतात् प्रतिभारत त् ।
वीर, ते जागर्ति कीर्तिर्वीर ते जागर्ति ।।
अद्राक्ष्म दु:खितानां वयमापदां पदानां
दृग्भ्योऽश्रुपातलक्ष्यान्यङ्गारवर्षणानि ।

अद्राक्ष्म कामनाभ्य: सुखभोगलालितानां
वयमेभिरेव नेत्रै रसरागवर्षणानि ।

अद्राक्ष्म वैद्युतीं तां दीप्तिं धनेश्वराणां
सद्मानि रोचयन्तीं चापल्य-दोष-हीनाम् ।

अद्राक्ष्म धूमलेखामधरेषु नीरसेषु
दारिद्रय-दारुदग्धानामान्तराग्निमुक्ताम् ।

अद्राक्ष्म नृत्य शालां लक्ष्म्या विलासधन्याम्
अद्राक्ष्म पीडितानां पीडामलक्ष्यसीमाम् ।।

—[देवभाषा]

## क्राम्याम देहलीम्

आच्छिद्य जीविकां न:, परकेऽद्य सन्ति पीना:
अवृताम ये वरिष्ठास्ते स्मोऽधुना स्म हीना: ।

ये धर्मकेतवस्ते वयमद्य धूलिभूता:
शीर्षण्यतामुपेता: कौपीनतां गतास्ते ।

किं लभ्यते कदन्नं परकार्पितं पटश्च;
क्राम्यन्तु देहलीं तत् क्राम्यन्तु देहलीं तत् ।

नहि रक्षितुं शिखापि श्मश्रूण्यपि स्म नस्तत्,
क्राम्यन्तु देहलीं तत्, क्राम्यन्तु देहलीं तत् ।

क्षुत्पीडिता म्रियन्ते लक्षाणि तत्कृते नो
कल्पामहेऽन्नदाने मोऽप्यशिक्षितानाम् ।

शिक्षामपि प्रदातुं प्रभवाम आह जीर्यद्-
हृदयेषु धातुमूर्क् च प्रभवाम आ इदानीम् ।

हा सत्त्वरज्जुबद्धा नो चालनेऽपि मूर्ध्नः
कल्पामहेऽवधूय स्वां दासतां प्रसक्ताम् ।

मूर्धानमुच्चमत्याचारस्य कर्तितुं तं
क्राम्याम देहलीं तत्, क्राम्याम देहलीं तत् ।

यद्यस्ति जीवितव्यं क्राम्याम देहलीं तत्
यद्यस्ति वर्तितव्यं क्राम्याम देहलीं तत् ।

यद्यस्ति कर्म कार्यं क्राम्याम देहलीं तत्
यद्यस्ति लभ्यमन्नं क्राम्याम देहलीं तत् ॥

चेन्नस्तृषापनेया क्राम्याम देहलीं तत्
लभ्यं यदस्ति वासः क्राम्याम देहलीं तत्

चेच्छत्रवोऽपनेयाः क्राम्याम देहलीं तत् ।
चेच्छ्रीः समर्थनीया क्राम्याम देहलीं तत् ॥

—(देवभाषा)

## स्वराज्य-प्राप्तिः

स्वमातृमूर्धखण्डनं स्वतन्त्रतात्मकः शिशु-
र्विधाय हाऽवतीर्णवान् समुत्सवं वितीर्णवान् ।

अनाप्य हा तटं तरौ तु कर्णधार ईयिवान्
अनेकधा प्रवातवातबाधनं समेयिवान् ।

असंख्य-सून-शातनं फलं शुभं यदाऽऽगतं
तदैव कीटदन्तकोटिघट्टनेन तत् क्षतम् ।

हिमाद्रिवर्त्मरोहणं कुनीतयस्तदापदाः
समापतन्ति यक्षराजसद्म किन्तु सम्पदाः ।

लुण्ठिता सुधा, न तृष्णजो मुखे कणोऽपि हा
पपात पातकायुतैर्युतो ऽमरेन्द्रसद्मनि ।

सुपुण्यवांश्च रौरवे किमेतदस्ति लक्ष्यतां
स्वराज्यमागतं सुराजता परन्तु नागता ।

—(कविः)

त्वं देवभूमिर्भरतावनिर्नस्त्वं वीरभूमिर्भुवि सुप्रसिद्धा ।
विध्वंस्य शत्रून् भव शान्तिदा त्वं चोत्तिष्ठ तज्जागृहि भारताम्ब ।।
त्वं व्यास-गोतम-पतञ्जलि-जन्मदात्री त्वं द्रोण-भीष्म-भरतार्जुन-कर्णधात्री ।
सीता-सती-समसुशीलसुताप्रसूस्त्वं मातः स्तशासनरता जयतात् पुरेव ।।

× × ×

स्वातन्त्र्यशालि गणतन्त्रकृतात्ममूर्तिः स्फारद्युतिः शुभमतिः पारिलब्धकीर्तिः ।
विश्वोन्नतिस्थिरगतिर्भरतावनिस्त्वं साम्बा सदा विजयतां जगतीतलेऽस्मिन् ।।
स्वाधीन शासनमिदं सफलं समेतु दिक्षु प्रसर्पतु च सद्गुण कीर्त्तिवल्ली ।
यायात समुन्नतिपथं भुवि भारतं नः वाञ्छेयमस्ति भगवच्चरणारविन्दे ।।

× × ×

संस्थापयज्जनमनःसु विवेकभावं विद्वेषि-दुर्जनचयान् दलयच्च नित्यम् ।
स्वायत्त शासनमिदं निजभारतस्य सर्वत्रकीर्त्तिमयतां जगतीतलेऽस्मिन् ।।

× × ×

गृहे गृहे भारतवासिनां पुनः स्वातन्त्र्य सौख्यानुभवोऽस्तु शर्मदः ।
भवन्तु सर्वे सुखिनः समन्तात् समुन्नतं स्याच्च सुभारतं नः ।।
इदं भवेद्विश्वजनेन संस्तुतं जगद्गुरुत्वेन पुनश्च कीर्त्तिम् ।
स्वभारतं सर्वजगद्विनायकं पुरेव भूयादधुनापि भारतम् ।।

—[श्री बालकृष्णभट्टस्य स्वतन्त्रभारते,
उत्तरपीठिकायाम्, पृ०, २२१-२३]

विक्रीय शीर्षं स्वकरैः सहर्षमाक्रेतुकामा निजदेशमानम् ।
स्पर्धाद्य पुष्टास्यसिशीर्षमध्ये पश्याद्य कं संवृणुते जयश्रीः ।।

—[स्वयम्प्रकाशशर्मणो भक्तसिंहचरिते, ५।२५]

हुतात्मराज्ञां चितिकासमक्षं प्रत्येकवर्षे भवितोत्सवैकम् ।
इदं हि तेषां स्मृतिचिह्नमेव तथैव ते सर्वजनैः स्मृताः स्युः ।।

—[स्वयम्प्रकाशशर्मणो भक्तसिंहचरिते, ५।२७]

वासन्तरङ्गे मम देहवस्त्रं करैर्निजैः रञ्जय देव सद्यः ।
येनास्मि कुर्यां निजदेशसेवां दत्त्वापि रक्तं निजदेहजन्यम् ॥

शिवोऽपि वीरो निजशत्रुहन्ता गोप्तुं स्वदेशं करवालहस्तः ।
वासन्तमेतत्परिधाय वस्त्रं स्वमातृभूमेर्निचकर्त्त पाशान् ॥

घनं कलङ्कं परदासताख्यं कलङ्कितं येन च वस्त्रमेतत् ।
किं जीवनं तस्य भवेत्प्रशस्यं यस्यास्ति देशः परशासितोऽत्र ॥

विद्रोहदावानलतप्तचित्तं भस्मीचिकीर्षुः खलपादपौधान् ।
इच्छामि देशस्य हिताय मृत्युं योऽसौ वरीयान् शतकोटिजीवात् ॥

वीक्ष्यान्यवीरान् बलिपाशबद्धान् उत्कण्ठितं मानसमस्तिमेऽपि ।
तदेव वासन्तपटं धरिष्ये यद् देशमुक्त्यै विधृतं प्रवीरैः ॥

—[भक्तसिंहचरितम् ५।१२-१६]

देशः सोऽयं विदितमहिमा योनिराश्चर्यभूम्नां
क्षोणी-चूडाऽऽभरण-शिखर-स्फार-हीरायमाणः ।

यस्मिन्नन्धं तम उपचितं छन्नविज्ञानरेखं
छिन्दन् मित्रोऽपर इव परं ज्योतिराविर्बभूव ॥

पश्यँल्लोकान् स्वकृत-कुकृतोद्भूतशोकान् समन्तात्
शक्तेर्दम्भात् सकलभुवनाभोगरोगायमाणान् ।

लूनं लीनं सुकृतमभितं ख्यापयन् भूतिमूर्ति–
र्यस्मिन् भूयोऽधृत नरतनुं पूरुषोऽसौ पुराणः ॥

अस्मिन् देशेऽजनि पृथुयशाः शाक्यवंश प्रदीपो
यन्नामापि स्मृतमसुमतां कल्मषाणि प्रमार्ष्टि ।

यो राजन्यो जगदविजितं दुर्ग्रहं शत्रुसैन्यं
मारादीनां धृतिमतिबलैर्लीलया निर्जिगाय ॥

भोगान् रोगान् भवसितिकरान् बन्धुमित्राण्यमित्रान्
आधिं राज्यक्षुधमगणयद् यो धनानीन्धनानि ।

चक्रे विश्वं गृहमिव दधे प्राणिमात्रे स्वबुद्धिं
सौख्यस्फीतिं परहितरुचौ पथ्यमिच्छापहारे ॥

आदिक्षद् यो मनुजसमतां भूतजातेऽनुकम्पां
दीनोद्धारं पुनरपघृणं वाऽऽतुरार्त्तिप्रणाशम् ।

चातुःसत्यं भुवि परिदिशन् धर्मचक्रप्रवृत्त्या
साधीयांसं जगति विदधल्लोककल्याण मार्गम् ।।

× × ×

स्निह्यन् दीने पतितदलितानातुरांश्चानुगृह्णन्
बन्धुप्रीत्या भुवनमखिलं मानयन्नात्मन्दीनम् ।
कुर्वन् हीनानभिमत पदासीनता सौख्यलीनान्
मुग्धी कृत्यावनिमयमभून्मोहनोऽन्वर्थनामा ।।

—शिवप्रसादभारद्वाजस्य

[भारतसन्देशे, पृ० १-२]

आसीत् पूर्वं धनदविभवा वीरमाता धरायां
तस्याः पुत्रा धरणिशयना विस्मृतक्षीरपानाः ।
सा दुर्दैवाद् विगतसुषमा रत्नगर्भाऽधुना नो
नग्ना स्वास्रं पिबति किमहो छिन्नमस्ता स्वरूपा ।।
कङ्कालस्य प्रतिकृतिमहो चेतसो भीतिहेतुं
मन्येऽहं त्वां स्वरुधिरहुतैर्वीरधात्रीं विदध्याम् ।।
जन्मन्यस्मिन् परमपि मुहुः पुण्यकर्मोच्चयेन
क्षीणक्षीणां श्रियमिह तवोद्धर्तु मीशो भवेयम् ।।
श्यामच्छाया दलित महिषा मुण्डमाला दधाना
मत्स्याजीवैः कथमनुकृतेर्म्लानपुष्पैरिहार्च्या ?
सूत्वा सिंहान् किमिह जननी फेरवाणामसि त्वं ?
धीरः संख्ये स्थिरनिजमहा मङ्क्षु हन्यादरातिम् ।।

—[दत्तदीनेशचन्द्रस्य
भारतगाथायाम्, पृ० १०]

## भारतजननी

अनेकभाषाविचारधाराधर्मकथापूजानुरञ्जिता
एकसूत्रतागुणविभूषिता भारतीयसंस्कारसंहिता ।
विश्वशान्तिसन्देशशालिनी भवतु भूतले सदा विजयिनी
अभयदायिनी भारतजननी भवतु भूतले सदा विजयिनी ।।

—श्रीनिवासरथस्य

हिमवत्कलहरसमरीचिसिते यमुना जलनील विभामहिते ।
रविचुम्बितकोकनदारुणिते जय भारत मेदिनि विश्वनुते ॥

नवसर्षपपीतदुकूलयुते बहुशस्यसमूहविभाहरिते !
मलयानिलमोदकलाकलिते जय भारतमेदिनि विश्वनुते ॥

अतिपुण्यपुरातनपद्धतिभिर्नवनूतन योग प्रयोगचयैः ।
समयोचित नीतिवलैः सहिते जय भारतमेदिनि विश्वनुते ! ॥

त्रिविधैः खलु तापचयैर्विकले मनुजे शुभनिर्वृति मादधती ।
नवमङ्गलदानविदग्धकरे जय भारतमेदिनि विश्वनुते ॥

मुनिभिर्मनुजैर्दनुजैर्विवुधैः कविभिर्नवचित्रकलैश्च तथा ।
निजजन्म सुजन्मसु कामयिते (!) जय भारतमेदिनि विश्वनुते ! ॥

अभिमान धनैः रणशौण्डभटैः कृषिकर्मपरैः श्रमिकैर्लसिते ।
शुचिशान्तिसुधाभरिते वरदे जय भारतमेदिनि विश्वनुते ! ॥

जय देश विदेश प्रभालसिते वहुवर्णजनौघप्रभालसिते ।
बहुलोक सुरीतिरसैः सरसे जय भारतमेदिनि विश्वनुते ! ॥

करुणाकलिते मुदिताभरिते मरसे सरले मृदुले ललिते !
सुदृढे दुरितौघ विनाशकरे जय भारतमेदिनि विश्वनुते ? ॥

——रमाकान्तशुक्लस्य ['जय भारतभूमे' (१९८१ ई०) इति सङ्कलनात्]

काञ्चनं बभूव यद्गतं मामकं तदेव भारतम् ।
युज्यते हिमालयो यदीयरक्षणे वृद्धिमाप भूतलं यदीयशिक्षणे ।
वैखरी च यस्य संस्कृतम् ।
अङ्गबङ्गकेरलान्ध्रमध्यभूयुतम् उत्कलासमोत्तरप्रदेशसम्मतम् ।
सिन्धुगुर्जरादिमण्डितम् ।
क्षालयत्यपां निधिः सदा पदाम्बुजं पार्वणेन्दुरश्नुते विशेषकश्रियम् ।
यन्महः प्रभातंनन्दितम् ।
जाति धर्मभारतीपृथक्त्वधर्षितम् एकसूत्रकलिपतं तथापि जीवितम् ।
लोकतन्त्रभावनाभृतम् ।
यस्य धूलिकर्दमे विलुठ्य सन्ततम् ईश्वरोऽपि लीलयाश्चकार सोऽद्भुतम् ।
स्वर्गतोऽपि भूरिसौख्यदम् ।
क्वाभिषेकवैभवं क्व काननोद्यमः राघवस्य नो सुखं न वाऽधिकश्रमः ।
योगभोगसाम्यशंसितम् ।

दृश्यतेऽधुनापि यत्कदम्बकानने नन्दनन्दनच्छविस्तु वेणुवादने ।
भाषते कलिन्दजा श्रुतम् ।
क्रन्दते सुदाम्नि दुर्विपन्नदीनता द्वारकाधिपे च भाति यत्र बन्धुता ।
तण्डुलैरवाप्यतेऽमृतम् ।
मेघमण्डलं विलोक्य जीवितप्रियां वक्ति गुह्यको निजां दुरन्तविक्रियाम् ।
वारिदो वहत्यभीप्सितम् ।
यस्य तीर्थमण्डलं करोति पावनं मोक्षदं च यत्सुरापगावगाहनम् ।
गौरवं हि लोकविश्रुतं
मामकं तदेव भारतम् ॥

—अभिराजराजेन्द्रमिश्रस्य

['मृद्वीका' (१९८५ ई०) इति सङ्कलनात्]

## त्रिरंगोध्वजः

आलवारऋषिवृन्दकरम्बितगीतिः काचन वेदयते
राष्ट्रियैकतां कलय सन्ततं दमयन्तीम् ।
भारतीयवसुधापुरातनी
नवनवाङ्कुरा प्रकृतिमोहिनी ।

□

# परिशिष्ट २

श्री अरविन्द की

क्रान्तिदर्शिनी संस्कृत-कविता

## ।। भवानी भारती ।।

तथा

उसका हिन्दी अनुवाद

# भवानी भारती

## श्री अरविन्दः

सुखे निमग्नः शयने यदासं मधोश्च रथ्यासु मनश्चचार ।
स चिन्तयामास कुलानि काव्यं दारांश्च भोगांश्च सुखं धनानि ॥१॥

कान्तैश्च श्रृङ्गारयुतैश्च हृष्टो गानैः स छन्दो ललितं बबन्ध ।
जगौ च कान्तावदनं सहास्यं पूज्ये च मातुश्चरणे गरिष्ठे ॥२॥

चक्रन्द भूमिः परितो मदीया खलो हि पुत्रानसुरो ममर्द ।
स्वार्थेन नीतोऽहमनर्च[1] पादे दुरात्मनो भ्रातृवधेन लिप्ते ॥३॥

सुखं मृदावास्तरणे शयानं सुखानि भोगान्वसु चिन्तयन्तम् ।
पस्पर्श भीमेन करेण वक्षः प्रत्यक्षमक्ष्णोश्च बभूव काली ॥४॥

नरास्थिमालां नृकपालकाञ्चीं वृकोदराक्षीं क्षुधितां दरिद्राम् ।
पृष्ठे व्रणाङ्कामसुरप्रतोदैः सिंहीं नदन्तीमिव हन्तुकामाम् ॥५॥

क्रूरैः क्षुधार्तैर्नयनैर्ज्वलद्भिर्विद्योतयन्तीं भुवनानि विश्वा ।
हुङ्काररूपेण कटुना स्वरेण विदारयन्तीं हृदयं सुराणाम् ॥६॥

आपूर्य विश्वं पशुवद्विरावैर्लेलिह्यमानाञ्च हनू कराले ।
क्रूराञ्च नग्नां तमसीव चक्षुर्हिंस्रस्य जन्तोर्जननीं ददर्श ॥७॥

आलोलकेशैः शिखरान्निगृह्य करालदंष्ट्रैश्च विसार्य सिन्धून् ।
श्वासेन दुद्राव नभो विदीर्णं न्यासेन पादस्य च भूश्चकम्पे ॥८॥

उत्तिष्ठ देहीति पिपासुरम्बा दध्वान रात्रौ नगरे वितारे ।
सेयं स्तनन्ती रजनीं तमिस्रां बभौ समापूर्य मनांसि चार्या ॥९॥

भीतः समुद्विग्नमनाश्च तल्पादुत्थाय पप्रच्छ तमो नमस्यम् ।
का भासि नक्तं हृदये करालि कुर्वाणि[2] किं ब्रूहि नमोऽस्तु भीमे ॥१०॥

---

१. नियमितरूपम्—आनर्च ।

२. नि० रू०—करवाणि ।

सिंहस्य सारावमुदीरयन्ती क्रूरस्य कुञ्जे भ्रमतो वधार्थम् ।
ससर्ज वाक्यानि करालमूर्तिर्यथा समुद्रस्तनितं शिलायाम् ॥११॥

मातास्मि भोः पुत्रक भारतानां सनातनानां त्रिदशप्रियाणाम् ।
शक्तो न यान्पुत्र विधिर्विपक्षः कालोऽपि नो नाशयितुं यमो वा ॥१२॥

ते ब्रह्मचर्य्येण विशुद्धवीर्या ज्ञानेन ते भीमतपोभिरार्याः ।
सहस्रसूर्या इव भासुरास्ते समृद्धिमत्यां शुशुभुर्धरित्र्याम् ॥१३॥

शूराः प्रगल्भाश्च हि शात्रवाणां स्पर्धालवं सोढुममर्षणास्ते ।
पूजां जनन्या रिपुभिः समाप्य रेजू रणान्ते रुधिराक्तदेहाः ॥१४॥

दीनाः क एते घृणिनो दरिद्राः शान्ति जघन्यां गणिकामिवान्धाः ।
भजन्ति भोः कापुरुषाः कुबुद्धय[1]आलिङ्ग्य[2] ये मोदथ मृत्युमेव ॥१५॥

क्लीवाः कियन्त्येवमसून्दिनानि धरिष्यथार्ताः प्रहृता वृथैव ।
हसन्त्यमित्रा अपमानराशिं क्रीणीथ शान्त्या धनशोषणञ्च ॥१६॥

म्लेच्छस्य पूतश्चरणामृतेन गर्वं द्विजोऽस्मीति करोति कोऽयम् ।
शूद्रादनार्यतरोऽसि शूद्रो व्रतैः किमेतैर्नरकस्य पान्थे ॥१७॥

उत्तिष्ठ भो जागृहि सर्जयाग्नीन् साक्षाद्धि तेजोऽसि परस्य शौरेः ।
वक्षःस्थितेन सनातनेन शत्रून्हुताशेन दहन्नटस्व ॥१८॥

कः क्षत्रबन्धुर्भवनेषु गूढो मद्येन कटाक्षैश्च विलासिनीनाम् ।
धर्मान्यशो दुर्बल विस्मृतोऽसि युध्यस्व भो वञ्चक रक्ष धर्मान् ॥१९॥

अस्त्येव लोहं निशितश्च खड्गः क्रूरा शतघ्नी नदतीह मत्ता ।
कथं निरस्त्रोऽसि मृतोऽसि शेषे रक्ष स्वजातिं परहा भवार्यः ॥२०॥

वैश्योऽसि कश्चेह विशः समृद्ध्यै धनं किमेतद्विपणीषु सज्जम् ।
म्लेच्छर्द्धिरेषा कुरुषे दरिद्रां मामेव कालीं खल मातृद्रोहिन् ॥२१॥

म्लेच्छर्द्धिमेतां ज्वलनाय देहि रोषाग्निना किं न बिभेषि काल्याः ।
देवीं भवानीं हृदि पूजयित्वा यतस्व लक्ष्म्यै भव जन्मभूम्याः ॥२२॥

भो भो अवन्त्यो मगधाश्च वङ्गा अङ्गाः कलिङ्गाः कुरवश्च सिन्धो ।
भो दाक्षिणात्याः शृणुतान्ध्रचोला वसन्ति ये पञ्चनदेषु शूराः ॥२३॥

ये के त्रिमूर्तिं भजथैकमीशं ये चैकमूर्तिं यवना मदीयाः ।
माताह्वये वस्तनयान्हि सर्वान् निद्रां विमुञ्चध्वमये शृणुध्वम् ॥२४॥

---

१. नि० रू०—कुबुद्धय ।
२. विकल्प—न जानथालिङ्ग्य कृतान्तमेव ।

कालस्य भेरीं शृणुताद्रिशृङ्गे रौद्रं कृतान्तं मम दूतरूपम् ।
दुर्भिक्षमेतानथ भूमिकम्पान् निबोधताधीशतमागतास्मि ॥२५॥
देहि क्रतून्देहि पिपासुरस्मि जानीहि दृष्ट्वा भज शक्तिमाद्याम् ।
शिरांसि राज्ञां महतां तनूश्च भोक्तुं नदन्ती चरतीह काली ॥२६॥
रक्तप्रवाहैरपि नास्मि तृप्ता शतैः सहस्रैरयुतैरजानाम् ।
प्रदत्त भित्त्वा हृदयानि रक्तं सम्पूजयन्त्येवमजां करालीम् ॥२७॥
येषां सदैवात्मबलिप्रवृत्ताः शूरा महान्तः प्रमुखाः कुलार्थे ।
सौम्या कराली भवति प्रजानां रक्तेन पुष्टा विनिहन्ति शत्रून् ॥२८॥
कं बिभ्यतार्या[1] रुधिरस्य सिन्धौ निमज्जतास्मिन्भवतार्यसत्त्वाः ।
त्रिशूलि भोः पश्यत तत्र पारे ज्योतिर्ह्युदेतीदमभिन्नतेजः ॥२९॥
कवे विलासिञ्शृणु मातृवाक्यं कालीं करालीं भज पुत्र चण्डीम् ।
द्रष्टासि वै भारतमातरं तां घ्नतीमरातीन्भृशमाजिमध्ये ॥३०॥
सनातनान्याह्वय भारतानां कुलानि युद्धाय जयोऽस्तु मा भैः ।
भो जागृतास्मि क्व धनुः क्व खड्ग उत्तिष्ठतोत्तिष्ठत सुप्तसिंहाः ॥३१॥
इमानि वाक्यानि निशम्य रात्रौ तेजश्च भीमं तिमिरे विलोक्य ।
चित्तं ननर्ताशु विहाय सद्म भोगान्विनिर्धूय च निर्जगाम ॥३२॥
सान्द्रं तमिस्रावृतमार्तमन्धं ददर्श तद्भारतमार्यखण्डम् ।
गूढा रजन्यामरिभिर्विनष्टा माता भृशं क्रन्दति भारतानाम् ॥३३॥
स भ्रामयामास दृशं रजन्यां भ्रातॄन्स तप्तस्तिमिरे विचिन्वन् ।
कङ्कालसाराणि ददर्श तानि शवानि तेषां करुणानि भूमौ ॥३४॥
तदा ददर्शासुरमेकमीशं किरीटिनं वज्रधरं महान्तम् ।
अस्रूणि रक्तौघशतानि मातुः संगृह्य पुष्णन्तमपत्यसंघान् ॥३५॥
पदा तुषाराद्रिमदीनसत्त्वं मृदन्तमन्ध्रानितरेण पौण्ड्रान् ।
प्रसारयन्तं करवालमुग्रं चीनावनौ पह्लवभूमिखण्डे ॥३६॥
खलं विशालं बलगर्वितं तं विकत्थमानं धर्ममधर्मबुद्धिम् ।
दृष्ट्वा त्वभूच्चित्तमिवाग्निकुण्डं क्रोधेन जज्वाल हि शाश्वतेन ॥३७॥
कुलानि सुप्तानि सनातनानि ह्वातुं जगौ जागरणाय भीमा ।
क्रूरं विरावौघमुदीरयन्ती पार्श्वे ममायाद्रजनीव घोरा ॥३८॥
भीमैः करालैर्धरणी वचोभिश्चचाल सिन्धुश्च नभो जगर्ज ।
भीमैः सरोषैश्च विलोकनैस्तैर्ब्रह्माण्डमुत्तप्तमिवाग्निवृष्ट्या ॥३९॥

---

१. नि० रू०—बिभीथ ।

त्रैलोक्यमुन्मादकरैः कराल्या आवाहनैः पूर्णमभूच्च सर्वम् ।
ज्वालामुखी दारुणवह्निगर्भा कण्ठादुदक्रामदजस्रशब्दा ।।४०।।

क्षोभेण तीव्रेण चराचरस्य क्षुब्धान्यपश्यं पृतनानि तत्र ।
स्वप्नोत्थितानीव वचः सुरौद्रं भो हन्यतां दुष्ट इतीरयन्ति ।।४१।।

ज्ञात्वा हि मातू रुदितं क्षतानि विद्युद्धराणीक्षणशतान्यभूवन् ।
क्रोधैः सहस्राणि ततो मुखानि भीमानि भीमं दनुजेशमायन् ।।४२।।

सुप्तेषु पुत्रेषु रणोत्सुकेषु निशाचरः शोणितमार्यमातुः ।
पिबन्विनर्दस्यबलान्वली को विहंसि चाण्डाल कृतान्तभक्ष्य ।।४३।।

इतीरयन्ती वचनानि रुष्टा शस्त्रं गृहीत्वा धनुरग्निगर्भम् ।
अभ्यद्रवद्भीममरातिमुग्रा पश्चात्पुरस्ताच्च जगर्ज काली ।।४४।।

ज्वालाकराला धरणी बभूव क्रोधैर्ज्वलद्भिर्गगनञ्च तूर्णं ।
ह्लेषारवैर्दुन्दुभिनाञ्च[1] नादैर्जगद्वित्रस्तं दनुजस्य युद्धे ।।४५।।

रक्ताक्तमेघा नभसीव तेपुः पपात चोर्व्यां रुधिरोग्रवृष्टिः ।
रक्तोदधौ रेजिर अद्रिसंघा वसुन्धरा रक्तमया बभासे ।।४६।।

भीमो रजन्यामसुरो बलीयान् ममर्द सैन्यानि सुरप्रियाणाम् ।
जगर्ज चोन्मत्तमनाः सुरारिः को मे समः पुंस्विति रूढगर्वः ।।४७।।

तदा तमिस्रामपसारयन्तं रक्तप्रकाशं दिवि बालसूर्यम् ।
शरोपमैर्घ्नन्तमिवांशुभिस्तं प्रीतो ददर्शाहमुदग्ररश्मिम् ।।४८।।

समाकुलं भाविभिरास्यवर्यैर्ब्रह्माणमपश्यमथाभ्ररूपम् ।
सहस्रनेत्राणि ददर्श तस्मिन् प्रतीक्षमाणान्यभयं जनन्याः ।।४९।।

द्विकोटिभास्वद्वरसूर्यभासं ज्योतिस्तदा सौम्यमरातिनाशि ।
नारीशरीरं रमणीयकान्ति दूरादुदीच्यामुदियाय शुभ्रम् ।।५०।।

तां ह्लादिता दीप्तजगत्सु देवास्तामन्तरीक्षे मधुरं वयांसि ।
जगुर्मनुष्याः प्रणिपत्य चोर्व्यां विश्वं विनष्टाधि यदाविवेश ।।५१।।

समाधिधीरा हिमभूतदेहा युगान्यनेकानि हिमाद्रिकूटे ।
ये योगिनो भारतगोप्तृरूपास्ते तुष्टुवुस्तां मुदिता महान्तः ।।५२।।

ज्ञानाकरेभ्यो हि विलोचनेभ्यो हिमानि मन्दं युगसञ्चितानि ।
उत्सार्य देवीमथ भीमकान्ति महाप्रतापा बलिनीमगायन् ।।५३।।

---

१. नि० रू० — दुन्दुभीनाम् ।

तुभ्यं नमो देवि विशालशक्त्यै नमामि भीमां बलिनीं कृपालुम् ।
त्वमेव वै तारयसीह जातीरूर्जस्वलायै नम आदिदेव्यै ॥५४॥

कस्ते बलं वर्णयितुं समर्थो देवि प्रचण्डे करपल्लवेन ।
एकेन हि भ्रामयसे रुणत्सि विश्वं सतारार्कमनन्तवीर्ये ॥५५॥

आजौ यदा नृत्यसि चण्डि घोरे शृगालघुष्टे दधती त्रिशूलम् ।
स्पर्शेन कम्पन्त इवायुधस्य महान्ति तारानियुतानि नाके ॥५६॥

दयार्द्रचित्ता रुदितेन पुंसां हंसि प्रजापीडकमस्तकेषु ।
यो मृत्युरत्ता भुवनस्य रौद्रः स किंकरस्ते वसति त्रिशूले ॥५७॥

शक्तिः परा कोटिषु मानवानां सैमन्युनां[1] त्वं भवसि प्रबुद्धा ।
आर्यान्विपन्नानवतीर्य पासि युगे युगे युध्यस आर्यमातः ॥५८॥

सद्योऽपि पश्यामि गिरावुदीच्यां देदीप्यमानं धवलं वपुस्ते ।
त्वं भ्राजसे ज्योतिरुदेषि सौम्ये प्रकाशयन्ती भुवनानि कान्त्या ॥५९॥

धेनौ समारूढमनोज्ञकान्ती रणोन्मदायां चरसीयमार्या ।
शैला इवोत्तुङ्गशिखाः समूलाः पतन्ति संघाः परितोऽसुराणाम् ॥६०॥

सा शुभ्रवर्णासितवृत्तशृङ्गा हिमस्य राशिश्चलतीव तूर्णम् ।
देवप्रिया भारतभूमिरार्या धेनुस्वरूपेण विहन्ति शत्रून् ॥६१॥

व्यूहास्त्वकस्माज्जितदैवतानां भयेन ते पाण्डुरवक्त्रकान्त्यः[2] ।
वारिप्रपाता इव पर्वतेभ्यो धावन्त्यधो वेगपराः सशब्दाः ॥६२॥

शृणोमि ते पाञ्चनदेषु भीमे स्वरानुदाराञ्जयनादमुग्रम् ।
निहन्यमानस्य रवं बलस्य भयङ्करे तारतरं शृणोमि ॥६३॥

कृष्णस्य सैषा यमुना स्रवन्ती रक्तेन नीलं विससर्ज वर्णम् ।
बङ्गेष्वसृक्कर्दममेव पश्य दिग्दक्षिणा भाति सुलोहितेव ॥६४॥

स्पृष्टास्त्रिशूलेन विहायसीमाः सुलोहिता भान्ति दिशः समन्तात् ।
अभ्राणि ते रक्तमयानि भीमे विभान्ति युद्धेन सुदारुणेन ॥६५॥

सिन्धोस्तटेषूपलकर्कशेषु देवीमपश्यं युधि शेषितारीन् ।
निःशेषयन्तीमदयां सकोपां शिवां त्रिशूलेन शिवस्य शत्रून् ॥६६॥

खुरैः सुनिष्पिष्टमिदं सुरभ्या घोरं किमेवापि सुकृष्णवर्णम् ।
मांसस्य पिण्डं[3] ह्यवनौ निरीक्षे शेषोऽयमस्त्येव तवाहितानाम् ॥६७॥

---

१. नि० रू०—समन्यूनाम् ।
२. नि० रू०—कान्तयः ।
३. विकल्प—पश्याम्यवनौ हि पिण्डम् ।

भग्नानि तस्मिन्निचये विरूपे प्रनिःसरन्तीव शिरांसि कानि ।
पादाः कराश्चापि हि तत्र तत्र क्रूरासि रुद्राणि करालकृत्या ॥६८॥

क्रूरासि रुद्राण्यथवा जघन्ये क्रूरे प्रजापीडनरूढगर्वे ।
दयेव भूतेयमलं यदार्यं स्वर्गप्रदं मृत्युमवाप युद्धे ॥६९॥

एको गतासोरपि रुद्रशत्रोर्धत्ते करः पावकगर्भमस्त्रम् ।
प्लुष्टश्च चीर्णश्च तथापि दग्धानसून्भवान्यां क्षिपतीव दैत्यः ॥७०॥

स्रोतांसि पश्यामि महायुधास्यादुद्गीर्यमाणानि हुताशनस्य ।
धृष्टोऽपि सो[1] नालभते तु चण्डीं तिष्ठन्प्रभामण्डलमूर्तिमग्रे ॥७१॥

खड्गः प्रक्षिप्तस्तु विषाणमध्ये विष्टम्भयत्यन्तिमचेष्टितन्तत् ।
समाप्तमेतत्तव तर्कयामि महाव्रतं देवि विशालवीर्ये ॥७२॥

तुभ्यं नमो देवि विशालशक्त्यै भीमव्रते तारिणि कष्टसाध्ये ।
त्वं भारती राजसि भारतानां त्वमीश्वरी भासि चराचरस्य ॥७३॥

त्वमीश्वरी त्वं जननी प्रजानां कोऽन्यः प्रभुर्दानमिदं तवाढ्ये ।
स्वामित्वमैश्वर्यमनिन्द्यतेजो ददासि या सापि निहंसि रुष्टा ॥७४॥

नमो नमो वाहनमेतदार्ये हिमाभकान्तं मधुरायताक्षि ।
तल्लाङ्गुलाग्रेण सुकृष्णभासा ध्वजं करोतीव तवोच्छ्रितेन ॥७५॥

नमो नमो देवि तवालकाली रणश्रमेण प्रसभं विमुक्ता ।
उड्डीयमाना नभसीव मेघो वेणिच्युता भाति सुदीर्घवक्रा ॥७६॥

श्वेतानने विद्युदिवासि भूमौ रुषा प्रदीप्ते हि विलोचने ते ।
क्रीडन्त्यपाङ्गेषु करालहासाः शतह्रदेव स्तनयित्नुमध्ये ॥७७॥

द्रष्टुं रिपूंस्तान्पतितान्गतासून् ग्रीवेयमीषन्नमिता च शुक्ला ।
सजानुवर्यं चरणं भवान्याः स्तम्भो हिमस्येव विभाति शुभ्रम् ॥७८॥

शुक्लं प्रवातैरनिलोपमं ते संक्षोभितं भासुरतोयदाभम् ।
वातीव वासो रुचिराणि मध्ये भ्राजन्त अङ्गानि शशिप्रभेव ॥७९॥

उदीर्णफेनः पयसस्तरङ्गः क्षीराब्धिमध्ये स्तनमेकमेतत् ।
त्वं दुर्निरीक्ष्यासि यदङ्गकान्तेस्त्विषाक्षिरम्ब[2] प्रतिहन्यते मे ॥८०॥

सनातनी देवि शिवस्य पूर्वं वपुस्त्विदं धारयसे युवत्याः ।
तुभ्यं नमस्तुभ्यमनादिमातः सौम्या भवाम्ब प्रणतेषु भीमे ॥८१॥

---

१. नि० रू०—स ।

२. नि० रू० —अक्षि ।

उद्दिश्य भूमिं द्रुमराजिनीलां शैलान्तरालेषु महत्सु दृश्याम् ।
कारुण्यमय्याः प्रसृतः करस्ते ददासि रुद्राण्यभयं प्रजानाम् ॥८२॥

तत्संज्ञया ते करपल्लवस्य तमो विधूतं भुवि भारतानाम् ।
रक्तस्य मेघा नभसोऽपधूता अचिन्त्यवीर्यासि शुभासि सौम्या ॥८३॥

सौम्यं वपुस्ते हिमवर्णमार्यं सौम्यं भवान्या वदनं ह्युदारम् ।
शुक्लाम्बरां यौवनशुभ्रकान्तिं स्नेहार्द्रनेत्रां बलिनीं नमामि ॥८४॥
नरास्थिमाला नृकपालकाञ्ची क्व सा कराली [ ][1]
नग्ना च घोरा विवृतास्यभीमा यस्या विरावैः सहसोत्थितोऽस्मि ॥८५॥
रक्तस्य योऽयं वहतीह सिन्धुश्छाया शुभाया हसतीव तस्मिन् ।
खड्गं परिभ्रामयति स्तनन्ती नग्ना सुघोरा च नमामि कालीम् ॥८६॥

काली त्वमेवासि सुनिष्ठुरासि त्वमन्नपूर्णा सदया च सौम्या ।
नमामि रौद्रां भुवनान्तकर्त्रीं प्रेमाकुलामेव नमामि राधे ॥८७॥

अनन्तशक्त्यृद्धिमशेषमूर्तिं को वक्ष्यतीमां तव सर्वशक्ते ।
तेजस्त्वमेतद्बलिनां बलञ्च त्वं कोमलानामपि कोमलासि ॥८८॥

सौम्यामहन्त्वां द्विभुजां नमामि त्रिशूलिनीं त्वामभयं वहन्तीम् ।
त्वामम्ब सावित्रि शुभे त्रिनेत्रे शुक्लाङ्गवस्त्रां वृषरूढकान्तिम् ॥८९॥
दशायुधाढ्या दशदिक्ष्वगम्या पातासि मातर्दशबाहुरार्यान् ।
सहस्रहस्तैरुपगुह्य पुत्रानास्से जगद्योनिरचिन्त्यवीर्या ॥९०॥

प्रकाशयन्तीं गहनानि भासैर्भीमां ज्वलत्पर्वतमूर्तिमग्र्याम् ।
पश्यामि देवीं नगरेषु सौम्यां द्वारि स्थितामार्यभुवः सखड्गाम् ॥९१॥

कलिं दमित्वा जननी प्रजानां सत्त्वाधिका [ ][2]
स्वाधीनवृत्तीनि पुनश्चरन्ति पश्यामि तान्यागममार्गगाणि ॥९२॥

पुनः शृणोमीममरण्यभूमौ वेदस्य घोषं हृदयामृतोत्सम् ।
सुज्ञानिनामाश्रमगा मुनीनां कुल्येव पुंसां वहति प्रपूर्णा ॥९३॥

सनातनान् रक्षति धर्ममार्गान् पुनः सहस्रांशुकुलार्यजन्मा ।
लक्ष्मीः पुनः साप्यचला स्मितास्या समुज्ज्वला राजति भारतेषु ॥९४॥

पुरातनीं मातरमागमानामागच्छताञ्च स्तुवताञ्च भूमिम् ।
प्राच्यां प्रतीच्यां जगतोऽखिलस्य कोलाहलं वेगरवाञ्शृणोमि ॥९५॥

---

१. अपूर्णम् ।

२. अपूर्णम् ।

सद्धर्मगर्भेति महाव्रतेति स्तुवन्ति सौम्याश्च भयङ्कराश्च ।
देव्याः प्रियां भूमिमनादिशक्त्यास्तीर्थस्वरूपेण च पूजयन्ति ।।६६।।

शिवस्य काश्यां निवसन्ति ये के मुक्ताः शिवस्पर्शेन भवन्ति देव्याः ।
पादार्पणेनैव तु पावनेन सर्वार्यभूमिर्जगतोऽपि काशी ।।६७।।

प्रीतिर्दया धैर्यमदम्यशौर्यं श्रद्धा तितिक्षा विविधाश्च विद्याः ।
अनन्तरूपे त्वमसि प्रसीद चिरं वसार्ये हृदि भारतानाम् ।।६८।।

सिन्धून्हिमाद्रिंश्च सुसौम्यभासा प्रकाशयन्ती सुदृढप्रतिष्ठा ।
तिष्ठ प्रसन्ना चिरमार्यभूमौ महाप्रतापे जगतो हिताय ।।६९।।

□

# भवानी भारती

सुख में डूबा हुआ
सो रहा था अपनी शैय्या पर जब मैं
घूम रहा था मन माधवी निकुंजों में
सोच रहा था कुल, कविता, कामिनी और
सुख भोग-सम्पदा के बारे में ।।१।।

पूजनीय माता के पावन चरणों में
मैं झूम-झूम कर गा-गा कर
बस बना रहा था ललित छंद श्रृङ्गार लिए,
और प्रिया के मंजुल मुख की स्तुति में मैंने गान किए ।।२।।

मेरे चारों ओर रो रही थी धरती
रौंद रहे थे दुष्ट असुर माँ के बेटों को,
मैं डूबा अपनी चिन्ता में
दबा रहा था पाँव दुष्ट के
जो मेरे ही सुहृत्-बान्धवों के लोहू से सने हुए थे ।।३।।

सुख से सोया था मैं कोमल शैय्या पर
सुख-सुविधा, धन के बारे में सोच रहा था,
भीषण हाथ लगा मेरे उर पर जैसे ही
भारत माँ थी प्रकट हुई चण्डी बन कर ।।४।।

अस्थिहार पहने थी वह, नरमुण्डों की मेखला कमर में
आँखें वृकोदरी सी उसकी, भूखी थी वह माँ, दरिद्र थी,
असुरों के आघातों से घावों के चिह्न पीठ पर थे,

---

श्री अरविन्द की संस्कृत रचना "**भवानी भारती**" का हिन्दी रूपान्तर, रचनाकाल—१९०४ से १९०८ के मध्य, मई १९०८ में इसे कलकत्ता पुलिस ने जब्त कर लिया था । प्रस्तुत रूपान्तर—**डा० मुरली धर कमलाकान्त**

सिंहिनी गरजती हुई
मार कर खा जाने को लगती थी ।।५।।

सकल भुवन को जला रही थी
क्रुद्ध, भूख से व्याकुल, अंगारों सी आँखें,
हुंकार उठी कटु स्वर में वह माँ
चीर रही थी हृदय देवताओं का भी ।।६।।

भर दिया भुवन को घोर पाशविक हुंकारों से,
अपने कराल हनु को वह चाट रही थी,
क्रूर, नग्न दर्शन थे ऐसे माँ के
ज्यों घने अँधेरे में हिंसातुर पशु की आँखें ।।७।।

आलोल केश से पर्वत-शिखरों को लपेट कर
दूर हटा सागर को दन्त प्रहारों से,
एक साँस से छिन्न-भिन्न कर दिया
नभो मण्डल को उसने,
पदन्यास से काँप उठी यह सारी धरती ।।८।।

नक्षत्रहीन थी रात, ज़ोर से चिल्लायी प्यासी माँ
—"उठो, उठो । दे डालो अब अपने को ।"
सुन हहा घोर यह गर्जन
भर गए सभी जन के मन,
यह रात अंधेरी गहरायी ।।९।।

डरा-डरा मैं, विचलित मन था
उठा तल्प से, पूछा तम से—कहो, कराली, कौन ?
रात में प्रगट हुई हो मेरे उर में,
बोलो, क्या मैं करूँ, भयंकरि ! तुम्हें नमन ।।१०।।

वन में घूम रहे हिंसातुर
क्रुद्ध सिंह सी गरज उठी वह,
और उचारे शब्द कराली ने वैसे ही
जैसे सागर जा टकराया किसी शिला से ।।११।।

बेटे ! मैं हूँ माता उस भारत की
जो रहा देवताओं का प्यारा और चिरन्तन

नहीं मिटाया जा सकता, दुर्दैव
काल या यम के हाथों जिसे कभी भी ।।१२।।

ब्रह्मचर्य्य से शुद्धवीर्य है जिनका
जो आर्य हुए हैं ज्ञान और श्रम के बल पर
वे चमक रहे हैं सौ-सौ सूरज जैसे
इस वसुन्धरा को जग मग जग उज्ज्वल कर ।।१३।।

शूरवीर हैं वे, प्रगल्भ हैं
रिपुओं की स्पर्धा को तिल भर नहीं सहेंगे,
शत्रुदमन कर पूजा करते हैं माँ की वे
और समर में जीत
रुधिर से सने हुए शोभा पाते हैं ।।१४।।

दीन, दरिद्र, घृणित ये पापी कौन ?
जो पाप-शान्ति को गले लगाते हैं ऐसे
अंधा गले लगाता है गणिका को जैसे,
रे कापुरुष ! कुबुद्धि !
मुदित तुम हुए मृत्यु को गले लगा कर ।।१५।।

क्लीब ! जियोगे कब तक ऐसे
वृथा प्रहारों को सह-सह कर
हँसते हैं ये शत्रु तुम्हारे
और खरीदे चले जा रहे धन शोषण,
अपमानराशि तुम चुप्प शान्ति से ।।१६।।

म्लेच्छ जनों का चरणामृत पी-पी कर
यह कौन गर्व कर रहा विप्र होने का,
तुम तो हो शूद्रों से आगे के अधम शूद्र
अब नरक मार्ग पर व्रत-उपासना क्या करते हो ? ।।१७।।

उठो-उठो रे जागो जागो,
यज्ञ हवन सब छोड़ो-छोड़ो
तुम तो हो प्रत्यक्ष तेज उस परम पुरुष के
उर में आग ज्वलित है एक चिरन्तन सबके,
आज दहन कर दो बैरी का, फिर निर्द्वन्द्व विहार करो ।।१८।।

महलों के भीतर छुप-छुप
राजन्य कौन यह भ्रू विलास, मदिरा में डूबा,
धर्म और यश भूल गया दुर्बल ! रे वंचक !
उठ, अब कर तू युद्ध
और रक्षा कर अपने धर्मों की ।।१९।।

लौह शिराओं में ही तेरी, प्रखर खड्ग तेरे हाथों
क्रूर शतघ्नी भी प्रमत्त समरांगण में हुंकार रही
तू निरस्त्र है कहाँ ? पड़ा है शव सा क्यों निष्प्राण
जाति बचा अपनी, दुश्मन को मिटा
और बन आर्य महान् ।।२०।।

और कौन तू वैश्य यहाँ पर ?
बाजारों में सजा रखा है यह धन कैसा ?
म्लेच्छ सम्पदा है यह तो, खल ! मातृद्रोही !
क्यों मुझ काली को कंगाल बनाता है ।।२१।।

आग लगा दे म्लेच्छ सम्पदा को तू
भयभीत नहीं क्या तू काली की क्रोध-अग्नि से ?
अन्तर में तू पूज भवानी माँ को
जन्मभूमि की लक्ष्मी के ही लिए यत्न कर ।।२२।।

ओ अवन्तिवासियों ! मगध के रहने वालों !
वंग-अंग में, ओ कलिंग में बसने वालों !
कौरव ! सैन्धव ! दक्षिण प्रदेश के लोगों !
सुन लो सब, ओ आन्ध्र और तंजौरवासियों !
ओ पंजाब देश में रहने वाले वीरों ! ।।२३।।

वे सब सुनें
सुनें वे सब जो पूजा करते हैं त्रिमूर्ति की
और यवन जो पूजा करते एकमूर्ति की
माँ मैं बुला रही, तुम सब मेरे बेटे
निद्रा त्यागो और सुनो जो कहती हूँ मैं ।।२४।।

अद्रिश्रृंग से सुनो काल की भेरी
रौद्र मृत्यु यह दूत बनी है मेरी

दुर्भिक्ष और भूकम्प देखते हो ये
बस, समझो, मैं आ गई काल की देवी ।।२५।।

हो शहीद मुझ पर बलि जाओ
मैं प्यासी हूँ, मुझे रक्त दो
देखो मेरी ओर, मुझे जानो
आदिशक्ति हूँ मैं, तुम मुझको पहचानो
घूम रही यह काली चारों ओर, गरज रही
राजन्यों के तन की भूखी, माँग रही मस्तक ।।२६।।

नहीं तृप्त मैं इन सैकड़ों, हज़ारों, अरबों
पशुबलियों की रक्तधार से,
हृदय भेदकर मुझे रुधिर दो,
पूजा होती है ऐसे ही सनातनी माता काली की ।।२७।।

देश पर कुर्बान होने को
राजन्य जो तैयार रहते हैं हमेशा
यह कराली सौम्य है उनके लिए
शत्रु का संहार करने को खड़ी है रुधिर पीकर ।।२८।।

आर्य ! कहो, डरते हो क्यों ?
इस रक्तसिन्धु में अवगाहन कर
आर्य सत्त्व बन कर दिखलाओ
देखो, देखो उस पार
दुर्धर्ष ज्योति का उदय हो रहा है त्रिशूल सा ।।२९।।

सुन । माँ के ये वचन विलासी कवि !
काली विकराली चण्डी की पूजा कर,
तू देखेगा निश्चय ही भारत माता को
जो घोर समर में ध्वंस कर रही होगी
अरियों के समूह का ।।३०।।

आह्वान कर भारत के उन वंशधरों का
जिनमें आग चिरन्तनता की सदा जल रही
तुम जीतोगे समर, डरो मत, उठो सुप्तसिंहों ! उठो
मैं जाग उठी हूँ, लो, कहाँ तुम्हारा धनुष कहाँ तलवार ।।३१।।

घनी रात में सुन-सुन कर ये बातें
और देख कर अंधेरे में भीषण तेज पुंज फैलता
नाच उठा मेरा मन, और उसी पल
झटक दिए सुख भोग, निकल आया घर से बाहर ।।३२।।

देखा मैंने—
घोर तिमिर में घिरा हुआ था अंधकारमय भारत
आर्य भूमि पर अंधकार की चादर सी फैली थी
रिपुओं के आघातों से क्षत-विक्षत भारत जननी को
घनी रात में फूट-फूट कर रोते देखा ।।३३।।

आँखें दौड़ीं अंधकार में दूर-दूर तक
अपने भाई और बन्धुओं को तलाशतीं
किन्तु मिले कंकाल शेष उनके शव
जो दीन-हीन से पड़े हुए पृथ्वी पर ।।३४।।

तभी दिखाई दिया एक असुराधिप
जिसके माथे पर था किरीट, हाथों में महावज्र
वह पाल रहा था अपने कुल को
माँ के खून चढ़े आँसू की धारा से ।।३५।।

एक चरण से दबा रखा था गत महिमा वाला हिमपर्वत,
आन्ध्र, पौण्ड्र को रौंद रहा था चरण दूसरा,
करवाल प्रखर वह बढ़ा रहा था
चीन और पह्लव देशों की ओर ।।३६।।

खल, विशाल, बलगर्वित उसको देखा
वह अधर्ममति सिखा रहा था पाठ धर्म का,
मेरा मन यह, अग्निकुण्ड सा होकर
जल उठा, सनातन क्रोध-अग्नि उपजा कर ।।३७।।

सोयी हुई सनातन मानवता को
लगी जगाने फिर से महिमा की देवी,
क्रूर गर्जना करती हुई चली आयी वह
मेरे पास गहन रजनी सी ।।३८।।

भीषण, कठोर उसकी आवाजें सुन कर
काँप उठी धरती, हिल गया समन्दर, गरज उठा आकाश
और भयावह क्रोध दृष्टि से उसकी
लगा दहकने यह सारा ब्रह्माण्ड
बरसने लगी आग हो जैसे ।।३९।।

गूँज उठे तीनों लोक
काली के उन्माद भरे आवाहन से,
शब्द अजस्र कण्ठ से उसके फूटे ऐसे
जैसे ज्वालामुखी, गर्भ में जिसके दारुण वह्नि बसी हो ।।४०।।

जड़-चेतन के तीव्र क्षोभ से
क्षुब्ध हुई सेना को मैंने देखा,
जो अभी स्वप्न से उठी हुई लगती थी
और रुद्र-आवेशित होकर चीख उठी—
अरे ! मार डालो इस अत्याचारी को ।।४१।।

माँ को रोता देख, देख उसके घावों को
बिजली-सी शत-शत-शत आँखें चमक उठी,
और सहस्र भयानक मुख वे मुड़े रोष से भर कर
उस भीम महादानव की ओर ।।४२।।

समरोत्सुक पुत्रों के सोते हुए कौन यह
आर्या माँ का रुधिर पी रहा असुर निशाचर ?
तू यम का आहार कौन रे नीच !
जो बलशाली होकर अबला का दमन कर रहा ।।४३।।

इस तरह रोष से ललकारा काली ने
अग्निगर्भ-धनु-शस्त्र उठाकर
झपट पड़ी चिल्लाती हुई उग्र वह
भयकारी रिपु के आगे-पीछे ।।४४।।

तीव्र क्रोध की ज्वालाओं से
धू-धू जलने लगी धरा यह, और गगन
त्राहि-त्राहि कर उठा जगत्

जब युद्धभूमि में गूँज उठी दुन्दुभियाँ
और हिनहिना उठे दानव के घोड़े ॥४५॥

नभ में खौल रहे थे बादल रंगे खून से
यहाँ धरा पर बरस रहा था रुधिर मूसलाधार
अद्रिसंघ उठ रहे रक्तसागर से,
वसुन्धरा यह रक्तमयी लगती थी ॥४६॥

देवानांप्रिय-भारतपुत्रों की सेना को
रौंद रहा था असुर भयंकर बलशाली वह अँधियारे में,
देवों का उन्मत्त शत्रु वह चिल्लाया अत्यंत गर्व से
—"कौन पुरुष मेरे समान विक्रम शाली ?" ॥४७॥

तभी गगन में मैंने देखा नन्हा सूरज
लाल उजाला फूट रहा था उसके तन से
चीर रहा था रश्मिशरों से अन्धकार को,
उस उगते सूरज को मैंने जी भर देखा ॥४८॥

ब्रह्म को देखा तब मैंने मेघरूप में
जो भविष्य के उज्ज्वल मुखमंडल से दमक रहे थे,
थी हज़ार आँखें उनकी
जो आतुर थी पाने को माँ से अभयदान ॥४९॥

तभी दूऽऽर उत्तर दिशि में
वह शुभ्र ज्योति-सी उठी सौम्य तन्वंगी,
अरि-विनाशिनी, रम्य तेज-बल की देवी
जैसे द्विकोटि भास्वर सूरज ही चमक रहे हों ॥५०॥

ज्योतिर्मय लोकों में स्तुति के गीत मुदित देवों ने गाये,
अन्तरिक्ष में पंछी गाने लगे मधुर मधुगान,
धरती पर जन-जन ने गाये नम्र भाव से गीत उसी के,
दिव्य ज्योति जब आई इस जगती का दुःख दूर करने को ॥५१॥

हिमशिखरों पर जो हिम ही हो गए
ध्यान में बैठे हुए अनेकों युग से,
वे भारत के प्रहरी, धीर, महायोगी
मुद्रित हुए, माता का करने लगे स्तवन ॥५२॥

युगों-युगों से संचित हिम को दूर हटाकर ज्ञान चक्षु से
भीमकान्ति-देवी-बलिनी के गाये गीत
महाप्रतापी ध्यानावस्थित उन धीरों ने ।।५३।।

ओ विशालशक्ति ! देवि ! तुम्हें प्रणाम ।
ओ महिमामयी करुणामयी बलशालिनी !
हो तुम ही हे देवि ! सबकी तारिणी
ओ आदिदेवि ! प्रणाम, ओ ऊर्जस्विनी ।।५४।।

कौन समर्थ ? करे जो तेरे बल का वर्णन
ओ प्रचण्डद्युति ! तेरे ही करपल्लव में है
सूर्य और तारों की गति-अपगति,
ओ अनन्तवीर्ये ! तेरे इंगित पर ही है
स्थिति और सर्जना निखिल विश्व की ।।५५।।

चीत्कार उठते शृगाल
जब महासमर में नाच रही होती हो तुम,
हे घोर चण्डि ! त्रिशूलधारिणि !
धूभर लेती हो जब तुम अस्त्रों को
काँप-काँप जाते हैं तारे अनगिन, नभ में ।।५६।।

रोती जनता, और दया से भर आता है चित्त तुम्हारा,
आततायियों के मस्तक तुम कुचल-कुचल देती हो,
रहता है तेरे त्रिशूल में भुवनभक्षी
रौद्ररूप वह मृत्युराज किंकर है तेरा ।।५७।।

क्रुद्ध हुई उस कोटि-कोटि जनता की
तुम प्रबुद्ध-सर्वोच्च शक्ति हो माता
तुम ही एक किनारा विपदाग्रस्त हुए उन आर्य जनों का,
युग-युग की तू समरतारिणी माता ।।५८।।

देख रहा हूँ अभी-अभी मैं उत्तर के पर्वतशिखरों पर
दीप्तिमान-वपु-धवल तुम्हारा,
दमक रही हो, हे ज्योतिर्मयि ! हे सुभगे ! तुम
अपनी द्युति से सकल भुवन को जग-मग-जग कर ।।५९।।

उन्मत्त धेनु पर समारूढ़ तुम देवी
मनमोहक छबि ले विचर रही हो समरांगण में,
असुरों के दल गिर-गिर पड़ते तेरे चारों ओर
ज्यों समूल ही गिरी जा रही शैल शिखाएँ ।।६०।।

उजली-उजली धेनु धवल हिम की ढेरी सी
विचर रही है इधर-उधरी बिजली सी,
वर्तुल-श्यामल-शृंगा, देवों की अति प्यारी
है यह आर्या भारत भुवि जो
धेनुरूप में किए जा रही रिपुसंहार ।।६१।।

हुए अचानक ही विवर्णमुख भय से
दानव दल, जीत चुके थे जो देवों को
निस्तेज भागते चले जा रहे थे वे नीचे
जैसे पर्वत से निर्झर कोलाहल करते हुए वेग से ।।६२।।

सुन रहा पंजाब में तेरे स्वरों को
सुन रहा जयगान जन-जन से, भवानी !
सुन रहा हूँ और भी ऊँचे स्वरों में
ओ भयंकरि ! रिपुहनन की यह कहानी ।।६३।।

श्रीकृष्ण की प्यारी यमुना कल-कल करती
हुई रक्त से लाल, नील छबि को बिसरा कर,
देखो-बंगभूमि में कीचड़ हुआ रक्त का,
दक्षिण की यह दिशा लग रही कैसी
लाल-लाल लोहू से रंगी हुई हो जैसे ।।६४।।

तब त्रिशूल से छूकर नभ में लाल-लाल हो उठी दिशाएँ
और बादलों ने भी पायी लाली
जब किया भवानी ! तूने यह दारुण संग्राम ।।६५।।

पाषाणों के बीच सिन्धु के तट पर
देखा मैंने देवी का संग्राम
और वध होते हुए शेष असुरों का,
क्रोधानल से भरी, दया को छोड़ शिवा वह
मिटा रही थी शिव के रिपुओं को त्रिशूल से ।।६६।।

स्वर्गधेनु के खुरन्यास से
कुचली पड़ी हुई क्या है यह अंधकार सी गहन कालिमा,
देख रहा हूँ—यह तो माँस-पिण्ड धरती पर
अब तेरे पापी रिपुओं का शेष यही है ।।६७।।

किन-किन के नरमुण्ड भग्न ये
झांक रहे हैं इस विरूप वध की लीला में,
इधर पाँव हैं, उधर किसी के हाथ पड़े हैं
इस विभीषिका में तुम कितनी क्रूर हुई हो माँ रुद्राणि ।।६८।।

क्रूर है तू, या दया दिखला रही माँ !
दुष्ट, हत्यारे, प्रजा के त्रासदायक, गर्व से उन्मत्त असुरों पर,
तव दया से समर में वे मृत्यु पावें
क्यों न फिर वे स्वर्गपथ की ओर जावें ।।६९।।

रुद्रशत्रु निष्प्राण हुआ था फिर भी
अपने क्षत-विक्षत जले हुए हाथों में
वह लिए हुए था अस्त्र एक विस्फोटक
फेंक रहा मानो देवी पर, दग्ध प्राण ही जैसे अपने ।।७०।।

देख रहा हूँ —महा अस्त्र के मुख से उठी आग की लपटें,
खड़ा हुआ है धृष्ट असुर चण्डी के आगे,
किन्तु नहीं छू सका दिव्य आभा मण्डल को ।।७१।।

अन्तिम यत्न हुआ अवरुद्ध असुर का
देवी ने जब, शृङ्गों के बीच खड्ग दे मारा,
ओ विशालवीर्ये ! लगता है मुझको
बस, अब हो ही गया महाव्रत पूर्ण तुम्हारा ।।७२।।

ओ विशालशक्ति ! देवि ! तुम्हें प्रणाम ।
ओ कष्ट साध्ये ! घोर व्रतिनी ! तारिणी !
भारती ! भारतजनों की माँ भवानी
शोभिनी, चल-अचल जग की धारिणी ।।७३।।

तू देवी, तू जन-जन की माँ
प्रभुता, शुद्ध तेज, सुख-वरदायिनी माँ,

कौन जग में और ? ऐसा दे हमें वर,
दायिनी तू, क्रुद्धरूप, विनाशिनी माँ ।।७४।।

जय हो माँ ! तेरी जय-जय हो,
मधु-विशाल-लोचने देवि ! तेरी जय हो,
हिम सा शुभ्र, मनोरम तेरा वाहन यह
पूँछ उठा कर, उसके श्यामल अग्रभाग को
फहरा रहा, ध्वजा हो जैसे ।।७५।।

घोर युद्ध में वेणीबन्ध खुला तेरा
बिखरे केश तुम्हारे, इतने बल से
उड़ने लगे व्योम में, लम्बे-घुँघराले
उमड़-घुमड़ छा रहे मेघ हों जैसे ।
ओ माँ ! तेरी जय हो । जय हो ।।७६।।

शुभ्रानने ! भूमि पर तुम विद्युत सी हो,
चमक रही है आँखें तेरी तीव्र रोष से,
खेल रहा तेरी आँखों में अट्टहास
घने बादलों में ज्यों खेल रही हो बिजली ।।७७।।

मरे पड़े रिपुओं पर आँखें टिकी हुई
ग्रीवा शुभ्र तुम्हारी थोड़ी झुकी हुई
और भवानी ! चरण शुभ्र आजानु तुम्हारे
उनमें हिमस्तम्भों की द्युति सी जगी हुई ।।७८।।

ज्योतिर्मय घन और पवन सा, धवल वसन
उन्मुक्त समीरण में लहराया,
और वसन के बीच-बीच में झाँक उठी
चन्द्रप्रभा सी उज्ज्वल मंजुल तेरी काया ।।७९।।

और पयोधर तेरा ऐसा है माँ !
जैसे क्षीर समुद्र
और उसमें उठती फेनिल लहरें हों धवल दुग्ध की,
दर्शन तेरा बड़ा कठिन माँ !
दृष्टि पराजित हुई
तुम्हारे अंग-अंग से फूट रही द्युति के आगे ।।८०।।

देवि ! सनातनि ! तुम्हें नमन ।
तुमने धारण किया यह युवती-वदन ।
जग में शिव से भी पहले तेरा चरण ।
ओ अनादि माँ भीमे ! तुम्हें नमन ।
शरणागत जन के हित कोमल बन ।।८१।।

ओ करुणामयि ! दीख रही तुम
विटप यूथ से श्यामल
गिरि शिखरों के विस्तृत अन्तराल में,
और तुम्हारा हाथ भूमि को लक्षित, फैला हुआ
ओ रुद्राणि ! अभयदान दे रही प्रजा को ।।८२।।

तेरे कर पल्लव के एक इशारे से
भारत की धरती का दूर हुआ अन्धियारा
और लहू के बादल भी छँट गए गगन से
शुभे ! प्रसन्ने ! शक्ति कल्पनातीत तुम्हारी ।।८३।।

सौम्य अंग तेरे, हिमवर्ण सदृश तुम आर्या
उल्लास भरा तेरा मुख मण्डल है उदार
शुक्ल वस्त्र पहने, यौवन की शुभ्रकान्ति से दीपित
स्नेह भरी आँखों वाली बलशालिनी माँ भवानी !
नमामि ।।८४।।

कहाँ ? कहाँ अन्तर्हित ही हो गई कराली
अस्थिहार पहने थी जो, नरमुण्डों की मेखला कमर में,
नग्न, भयंकर थी जो भीमा खुले-खुले मुख वाली,
उठ बैठा हूँ मैं उसके ही मक्षाघोष पर ।।८५।।

यह जो नदी सी बह रही है रक्त की
उसमें बसी हँसती हुई सी एक छाया
असि घुमाती, गरजती चण्डी विवसना
माँ महाकाली ! तुम्हें मेरा नमन ।।८६।।

तुम ही काली, कितनी निष्ठुर हो तुम
तुम्हीं अन्नपूर्णा, सदया सरला हो,
हे भुवनान्तकारिणी ! रुद्रभवानी !
प्रेमविह्वले राधे ! मेरा तुम्हें नमन ।।८७।।

तू ही है यह तेज और तू ही है बलवानों का बल,
तू कोमल से कोमलतर है, सर्वशक्ति तू
कौन करे तेरे अनन्त बल का वर्णन
जो प्रकट हुआ है विपुल, ऋद्धि से आपूरित ।।८८।।

प्रसन्नवदने ! द्विभुजे ! तुम्हें प्रणाम ।
ओ त्रिशूलिनी ! अभयदायिनी ! तुम्हें प्रणाम ।
सावित्री तुम, माँ कल्याणी ! त्रिलोचना !
शुभ्रांगी, शुक्लाम्बरा वृषवाहना ।।८६।।

दस आयुध तू धारण किए हुए माँ !
दुर्लभ है तू दसों दिशाओं में भी,
आर्य जनों की रक्षा में रत दसों भुजाएँ,
हैं पुत्रों पर तेरे अगणित वरद हस्त,
हे अकूत बलशालिनि ! माता जगत्-योनि ।।६०।।

घने अन्धेरे में फैलाती हुई उजाला,
जलते पर्वत सी तेरी भीषण काया
देख रहा हूँ, शस्त्र हाथ में लिए खड़ी है देवी सरला
आर्यभूमि के नगर-नगर, द्वारे-द्वारे ।।६१।।

कलि का हुआ दमन तेरे हाथों जन-जननी !
स्वाधीनवृत्ति से चलने लगे यहाँ के लोग,
वेदमार्ग पर, देख रहा मैं ।।६२।।

वैदिक मंत्रों के स्वर गूँज रहे फिर
वन प्रान्तों में ये दिए सुनाई मुझको
वे ही स्वर हैं हिय का अमृत निर्झर,
यह जनसरिता है वही जा रही, देखो
मुनिजन के गुरुतर ज्ञानपूर्ण श्रमपथ पर ।।६३।।

सूर्यवंश में जन्म लिया है जिन आर्यों ने
वे चल रहे सनातन धर्ममार्ग पर फिर से,
स्मित मुख, उज्ज्वल-उज्ज्वल लक्ष्मी अचला
भारत भूवि पर राज रही है फिर से !।६४।।

इसी पुरातन मातृभूमि के पथ पर चला आ रहा भारत,
मातृवन्दना, स्तवनगीत, यह गाता चला आ रहा भारत,
पूरव-पश्चिम में कोलाहल निखिल विश्व का
सुना—मातृचरणों में चला आ रहा भारत ॥६५॥

सत्यधर्मधारिणी ! महाव्रतचारिणी ! तेरी वन्दना,
सरला, विकराला, अनादि देवीनां प्रिय धरणी ! वन्दना,
शक्तिशालिनी, तीर्थरूपिणी ! तेरी वन्दना ॥६६॥

जो जन रहते हैं शिव की काशी में
हो जाते हैं मुक्त, स्पर्श से जैसे शिव के,
देवी के पावन पादार्पण से ही वैसे
आर्य भूमि यह जग की काशी बन जाएगी ॥६७॥

प्रीति, दया तू, धैर्य, अदम्य शौर्य, श्रद्धा तू
तू ही क्षमा, विविध विद्या तू
ओ अनन्तरूपा ! प्रसन्न हो
भारत के जन मन में तेरा चिर निवास हो ॥६८॥

सिन्धु, हिमालय को अपने
कोमल प्रकाश से जग मग कर दे,
अजर-अमर चिरकीर्त्तिशालिनी !
महिमामयी प्रतापिनी !
जग के हित में आर्य भूमि पर
चिरनिवास कर मंगल वर दे,
जय भारती भवानी ॥६९॥

□